CASIO

# ताल मिलाओ धूम मचाओ!

अब झूमिए मस्ती में कैसिओ कीबोर्ड के साथ, क्योंकि इसमें है सुर और ताल का ऐसा अनोखा मेल कि आपका दिल गा उठे और कदम थिरकने लगें अपनी मनपसन्द धुनों के साथ। तो बस शुरू हो जाइये और फैला दीजिये अपनी मस्ती का रंग और कैसिओ की उमंग, चारों ओर!

SOUND KIDS












**CITY MUSIC CO., PTE LTD.**
Singapore Tel: 3377058, 3377545

**ONFLO MUSIC CO., LTD.**
Hong Kong Tel: 722 4195

**RAINBOW PHOTO FINISHERS PTE LTD.**
Nepal, Kathmandu Tel: 221724

**GENERAL ENTERPRISES COMPANY**
U.A.E., Dubai Tel: 224131/2/3

**MAHMOOD SALEH ABBAR CO.**
Saudi Arabia, Jeddah Tel: (02)6473995

**ARABIAN CAR MARKETING CO.,LTD.**
Oman Tel: 793741

**CASIO COMPUTER CO., LTD.**
Tokyo, Japan

M-9111 RAPCI HN

# Ekco®

## MARKERS

प्राप्याश्चतुर्विंशतेः संघाते ।

नव्यतमं तत्! सुचारुस्वरूपम्! विविधेषु सूज्ज्वलवर्णेषु च!

लक्षशः अंकनिकसंचाः अमेरिकायाः संयुक्तगणराज्येषु निर्याप्यन्ते!




भारतभूमिया निर्मातारः निर्यापकाश्च ।

प्रिमियम रायटिंग पॉइन्टस प्रा. लि. १८, सुभाषमार्ग; विलेपार्ले (पूर्व), मुंबापुरी ४०० ०५७

SureShot/3336/Sans.

# वाक्यजिज्ञासा – ६

(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति। तस्य अधः तत्सम्बद्धं विवरणं भवति। ततः अन्यत् वाक्यं, पुनः विवरणम्। एवम् अत्र क्रमः।

विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते। अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते। शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः। तादृशाः, वाक्येन वाक्यद्वयेन वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम्। तावता एव 'किं शुद्धम्' इति ज्ञायते। 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम्।)

**२७. 'क्त' इत्ययं कृदन्तप्रत्ययः कर्मणि भूते प्रयुज्यते।**

० 'कृत्प्रत्ययः' इति प्रयोक्तव्यं, न तु 'कृदन्तप्रत्ययः' इति। प्रत्ययस्य नाम 'कृत्' इति। 'कृदन्तः' इति प्रत्ययस्य नाम न। कृत् अन्ते येषां ते कृदन्ताः शब्दाः। (गतः, पठितः इत्यादयः कृदन्ताः।) कृदन्तरूपाणि इत्यादयः प्रयोगाः बहुधा श्रूयन्ते। तत्संस्कारबलात् कृदन्तप्रत्ययः इति रूपं प्रयुक्तं स्यात् कदाचित्।

**२८. अहो, मम प्राणः गतः इव!**

० 'प्राणाः गताः इव' इति प्रयोक्तव्यम्। पुल्लिङ्गः प्राणशब्दः बहुवचनान्तः प्रयुज्यते एतस्मिन् अर्थे। तथा च अमरकोषः– "पुंसि भूम्न्यसवः प्राणाः" इति। कविप्रयोगो यथा– 'प्राणैः पणैः स्वं निपुणं भणन्तः' इति (नैष० ३.८८) श्रीहर्षः। 'प्राणैरुपक्रोशमलीमसैः वा' इति कालिदासः (रघु० २.५३)।

प्राणशब्दः एतस्मिन् अर्थे बहुवचनान्तः प्रयुज्यते इत्यस्य अर्थः– अर्थान्तरे एकवचने न प्रयुज्यते इति न। प्राणापानसमानव्यानोदानाः पञ्च प्राणाः इति उच्यन्ते। एवं पञ्चसु अन्यतमस्य प्राणनामकस्य प्राणस्य निर्देशे तु एकवचनम् एव। प्राणाः पञ्च सन्ति इत्यतः असुवाचकत्वे प्रायः बहुवचनं प्रयुज्यते लोके।

**२९. कोशः (तालव्यवर्णयुक्तं) इति रूपं साधु, उत कोषः (मूर्धन्यवर्णयुक्तं) रूपं साधु?**

० "कोशः" "कोषः" इति उभयम् अपि साधु। तावदेव न, उभयम् अपि पुल्लिङ्गे नपुंसकलिङ्गे चापि अस्ति। कुष-निष्कर्षे इत्यस्मात् धातोः घञ्प्रत्यये कृते

'कोषः' इति रूपं सिध्यति। कुष्यति निष्क्रामत्यस्मात् इति कोषः। 'कोषोऽस्त्री....' इति मूर्धन्यान्तपाठः, 'कोशोऽस्त्री.....' इति तालव्यान्तपाठः च मेदिनीकोषे दृश्यते। अतः रूपद्वयस्य अपि साधुत्वम् अङ्गीक्रियते। अमरकोषे "कोषोऽस्त्री....." इति पाठः एव आदृतः दृश्यते।* अतः व्युत्पत्त्यनुगुणं चिन्त्यते चेत् 'कोषः' इति मूर्धन्यपाठः एव युक्तः इति भाति। किन्तु 'कोशः' इति तालव्यवर्णयुक्तस्य रूपस्य उपयोगे अपि न कोऽपि दोषः।

**३०. त्रिविक्रमः शवं स्कन्धे आरोप्य स्मशानं प्रति प्रस्थितवान्।**

○ 'स्मशानम्' इति असाधु। '**श्मशानम्**' इति रूपं प्रयोक्तव्यम्। श्मानः शवाः शेरते अत्र इति श्मशानम्। श्मन्शब्देन शवः उक्तः। अतः श्मशानम् इत्यत्र आदौ शकारः एव श्रूयते न तु सकारः। अमरकोषस्य सुधाव्याख्याने स्पष्टैः शब्दैः लिखितम् अस्ति– 'द्वितालव्ययुक्तं पदम् एतत्' इति।

**३१. सङ्गीतविद्वांसस्य गायनं श्रुत्वा सर्वे जनाः सन्तुष्टाः।**

○ 'विद्वांसस्य' इति रूपम् अशुद्धम्। '**विदुषः**' इति प्रयोक्तव्यम्। गानम् इत्यस्मिन् अर्थे गायनशब्दस्य प्रयोगः अपि दोषाय। '**गानम्**' इत्येव प्रयोक्तव्यम्।

'विद्वस्' इति शब्दः सकारान्तः। तस्य प्रथमाविभक्त्येकवचनान्तं रूपं 'विद्वान्' इति। षष्ठीविभक्तौ एकवचने ङस्प्रत्यये 'वसोः सम्प्रसारणम्' (६-४-१३१) इति सूत्रेण सम्प्रसारणे, पूर्वरूपे, विसर्गे च 'विदुषः' इति रूपं सिद्ध्यति। विद्वांसस्य इति रूपं तु अशुद्धम्। अकारान्तभ्रान्त्या विद्वांसस्य इति रूपं प्रयुज्यते कदाचित्।

'गायनम्' इति प्रयोगं कुर्वता वस्तुतस्तु गै-शब्दे इत्येतस्य धातोः भावार्थकं ल्युडन्तरूपम् इष्टम्। गै धातोः ल्युट्प्रत्यये कृते गानम् इति रूपं सिध्यति। तथा च कोषः– "गीतं गानमिमे समे' इति। (अमरकोषे)

गायनशब्दः पुल्लिङ्गे रूढः, न तु नपुंसके। गै(शब्दे) धातोः ण्युट्प्रत्यये कृते गायन इति रूपं सिद्ध्यति। तस्य अर्थः तु गायकः/गानकर्ता इति। तथा च कविप्रयोगः– "तथैव तत्पौरुषगायनीकृताः" (नैषधे १.१०३) इति। "स्तेनगायनयोश्चान्नं...." (मनुस्मृतौ ४.२१०) इति वा।

---

* भानुजिदीक्षितविरचितया सुधाव्याख्यया युक्ते, निर्णयसागरमुद्रणालयेन प्रकाशिते।



# चन्दमामा

नवम्बर्-१९९१

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## अस्माकं जीवने विज्ञानस्य पात्रम्

विज्ञानं विना कस्यापि समाजस्य भविष्यम् उज्ज्वलं न भवेत्। तावदेव न, विज्ञानम् अस्ति चेदपि, तत् आध्यात्मिकशक्त्या न निगृहीतं चेत् न कोऽपि लाभः।

भूतपूर्वेण प्रधानमन्त्रिणा जवहरलाल नेहरूमहोदयेन श्रीलङ्काविश्वविद्यालयस्य विज्ञानाभिवृद्धिसङ्घस्य सभायां भाषमाणेन एवम् उक्तम्। वास्तविकी स्थितिः खलु एषा?

विज्ञानस्य वैशिष्ट्यं यत् तत् ऊहामात्रं कल्पनामात्रं वा न अङ्गीकरोति। सर्वम् अपि प्रयोगप्रमाणितं स्यात् एव। सर्वेषु विषयेषु निस्सन्दिग्धता स्यात्। ऊहापोहस्य लेशमात्रम् अपि अवकाशः न भवेत् तत्र।

अतः एव प्रपञ्चे मानवजीवने विज्ञान-तन्त्रज्ञानयोः अभिवृद्ध्या क्रान्तिः कृता दृश्यते। कृषिः, यन्त्रोद्यमः, रक्षणम्, आरोग्यम् – इत्यादिषु सर्वेषु क्षेत्रेषु विज्ञानस्य हस्तप्रसारः दृश्यते। लोके तादृशं क्षेत्रं प्रायः न स्यात् यत्र च वैज्ञानिकप्रगत्याः प्रभावः न जातः स्यात्।

किन्तु, एवं बहुमुखप्रगतौ सत्याम् अपि, विज्ञानेन मानवस्य आध्यात्मिक-नैतिक-समस्यानां निवारणं कर्तुं न शक्तम्। अन्धैः निरूप्यमाणं गजरूपम् इव विज्ञानस्य भाविरूपम् अस्पष्टम् अस्ति इदानीम् अपि। अतः ऋतस्य-परमार्थस्य-अन्तिमसत्यस्य अन्वेषणे विज्ञानं यथा प्रवृत्तं स्यात् तथा करणीयम् अस्ति इदानीम्।

सम्पुटः–८ नवम्बर्–१९९१ सञ्चिका–८

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नई उमर के नये रंग





मौज ही मौज
स्कूल में आए
नए फ़ेविक्रिल
स्टूडेंट पोस्टर कलर्स
ऐसा रंग जमाएं
रंग मुलायम उभरा-उभरा



तोता—हरा-हरा लगे खरा



चटख लाल, नीला,
चमकीला



सफेद निराला ज्यों बर्फीला
हर रंग अलबेला
तो झटपट चित्रों में रंग भरो
नए फेविक्रिल स्टूडेंट
पोस्टर कलर्स के संग
मौज करो!



देख तुम्हारा काम और
इसका दाम मम्मी हुई हैरान!



मुफ़्त पेंट-ए-पोस्टर

नए फ़ेविक्रिल® स्टूडेंट पोस्टर कलर्स






नाम: ______ उम्र: ______
पता: ______
स्कूल ______

फ़ेविक्रिल पेंट-ए-पोस्टर तुरंत भेज दें।

# क्षीयमाणा अस्ति वर्णभेदनीतिः

क्रीडाप्रियाः अन्ताराष्ट्रियासु क्रीडास्पर्धासु इतः परं पुनरपि दक्षिणाफ्रिकादेशीयान् क्रीडापटून् द्रष्टुम् अर्हन्ति। तेषां भागग्रहणम् एतावत्पर्यन्तं निषिद्धम् आसीत्। इदानीं स च निषेधः अपसारितः अस्ति। दक्षिणाफ्रिकादेशस्य शासनेन वर्णभेदनीतिः अनुस्रियमाणा आसीत्। अतः २१ वर्षेभ्यः पूर्वं (१९७० तमे वर्षे) 'इण्टर्न्याषनल् क्रिकेट् कौन्सिल्' (ऐ.सि.सि.) 'इण्टर्न्याषनल् ओलम्पिक् कमिटी' (ऐ.ओ.सि.) इत्येताभ्यां दक्षिणाफ्रिकादेशः स्वक्रीडासु यथा भागं न गृह्णीयात् तथा निषेधः कृतः आसीत्। गतस्य जुलैमासस्य पूर्वार्धे ताभ्यां निषेधः प्रतिस्वीकृतः।

निषेधापगमकारणतः, १९९२ तमे वर्षे फेब्रवरीमासे प्रचलिष्यमाणे 'वर्ल्ड् कप् क्रिकेट्' स्पर्धायाम्, एतस्य वर्षस्य अन्ते प्रचलिष्यमाणे बार्सिलोना (स्पेन्) ओलम्पिक्स्पर्धायां च दक्षिणाफ्रिका भागं ग्रहीष्यति। एतावन्ति वर्षाणि यावत् एतद्देशीयाः क्रीडापटवः अन्ताराष्ट्रियस्पर्धासु भागग्रहणात् वञ्चिताः आसन्।

इदानीं श्वेतवर्णीयानां शासनकानां चिन्तने परिवर्तनम् आगतं दृश्यते।




वर्णभेदनीतिं विरुध्य व्यवहरन् नेल्सन् मण्डेला २५ वर्षात्मकात् कारागारवासात् मोचितः। (१९८९ तमे वर्षे) एतदनन्तरं नेल्सन् मण्डेला-डीक्लर्क्वर्ययोः मध्ये समालोचनं प्रवृत्तम्। एतस्य परिणामतः डीक्लर्क् अङ्गीकृतवान् यत् वर्णभेदनीतिप्रोत्साहकान् त्रीन् नियमान् अपाकरोमि इति। अतः इतः परं तत्र कृष्णवर्णीयाः देशे यत्र कुत्रापि स्थातुम् अर्हन्ति। अध्ययनार्थं बालान् यं कञ्चिदपि विद्यालयं प्रति प्रेषयितुम् अर्हन्ति। श्वेतवर्णीयानां संस्थासु उद्योगं प्राप्तुम् अपि अर्हन्ति। दक्षिणाफ्रिकादेशे वर्णभेदनीतेः निवारणार्थं भारतदेशेन अन्यदेशैः सह बहुधा

प्रयत्नः कृतः एव। तृप्तिकरी सफलता प्राप्ता चापि।

दक्षिणाफ्रिकादेशे यत् परिवर्तनं जायमानम् अस्ति तत् विश्वस्य सर्वे देशाः कुतूहलेन परिशीलयन्तः सन्ति। षट् वर्षाणि यावत् यत् आर्थिकं बन्धनम् आसीत् तत् अपाकृतम् अमेरिकादेशेन। एतेन क्रमेण जपानदेशः सन्तुष्टः दृश्यते। स्वीडन्प्रभृतयः देशाः तु अमेरिकादेशेन कृतं क्रमम् 'अविचिन्त्य कृतम्' इति वर्णितवन्तः।

एतस्मिन् विषये अमेरिकादेशः वदति– "दक्षिणाफ्रिकादेशे आपत्परिस्थितिः दूरीकृता अस्ति। राजकीयबन्दिजनाः विमुक्ताः सन्ति। इतः पर वर्णभेदरहितः सर्वकारः तत्र स्थापितः भविष्यति इति विश्वसिमः वयम्। अतः अस्माभिः यत् कृतं तत् उचितम् एव" इति।

श्वेतवर्णीयानां सर्वकारेण ये क्रमाः अनुष्ठिताः तेषां विषये तृप्तिं प्रकटयन् नेल्सन् मण्डेला एतदपि उक्तवान् अस्ति यत् इतः परं जागरूकता आश्रयणीया अस्ति इति। यतः विविधान् व्याजान् वदता सर्वकारेण इतोऽपि बहवः राजकीयनेतारः कारागारात् न मोचिताः। कृष्णवर्णीयानां विविधगणेषु अन्तःकलहः इतोऽपि न शान्तः। हिंसाकृत्यानि तत्र अनुवर्तन्ते। अतः स्वतन्त्रा राजकीयाभिव्यक्तिः तत्र इतोऽपि दुश्शका एव अस्ति।



पत्नीसहितः नेल्सन् मण्डेला



# स्वशक्तौ विश्वासः

परशुरामः कश्चन युवकः। सः यद्यपि पञ्चविंशतिवर्षीयः तथापि किमपि कार्यं न जानाति। ग्रामे सर्वत्र इतस्ततः स्वेच्छया अटन्, द्यूतादिक्रीडासु मग्नः सन् सः समयं यापयति।

परशुरामः यदा बालः आसीत् तदा एव तदीया माता दिवङ्गता आसीत्। 'बालः मातृविहीनः' इति चिन्तयन् तदीयः पिता रामदासः महत्या प्रीत्या तं पालितवान् आसीत्। अतः एव दुर्मार्गगामी अलसः च जातः अस्ति परशुरामः।

अथ कदाचित् परशुरामस्य पिता रामदासः दिवङ्गतः। इदानीम् उदरपोषणं स्वयं करणीयम् अस्ति परशुरामेण। परशुरामः श्रमं न इच्छति खलु? अतः सः सर्वतः ऋणं स्वीकृतवान्। यदा कुतश्चित् अपि ऋणं न प्राप्तं तदा कुटीरं विक्रीय कानिचन दिनानि यापितवान्। कार्यम् अकुर्वन् इन्द्रः अपि दरिद्रः भवति एव खलु? नितरां दरिद्रः 'परशुरामः अन्ते निश्चितवान्– इतः परं वा मया किमपि कार्यं करणीयम् इति।

परशुरामस्य आलस्यं दुर्व्यसनशीलतां च ग्रामीणाः सर्वे जानन्ति एव। अतः ग्रामे कोऽपि तस्मै उद्योगं दातुं सिद्धः न जातः। अन्ते खिन्नः परशुरामः तं ग्रामं परित्यज्य प्रस्थितवान्।

सायङ्कालसमये तेन एकम् अरण्यं प्राप्तम्। तदा एव आकाशे मेघाः सम्मिलिताः। वायुसञ्चारः तीव्रः जातः। अल्पे एव काले वृष्टिः अपि आरब्धा। वृष्टितः आत्मनः रक्षणार्थं वृक्षान् आश्रयमाणः परशुरामः अग्रे गतवान्। ततः अनतिदूरे प्रकाशः दृष्टः तेन। 'अहो, कोऽपि आश्रयः



प्राप्तः' इति आलोच्य वेगेन पदानि स्थापितवान् परशुरामः।

स च कश्चन जीर्णः आलयः। आलयस्य अन्तः कश्चन लघुदीपः दृश्यते। आलयस्य अन्तः पतितं जलं वस्त्रेण मार्जयन् कश्चन युवकः तत्र दृष्टः परशुरामेण। सः युवकः परशुरामं दृष्ट्वा– "भोः, कः भवान्? वृष्ट्या सर्वथा आर्द्रः खलु भवान्। प्रथमं शरीरं मार्जयतु" इति वदन् शुष्कं स्नानवस्त्रं दत्तवान्। परशुरामः शरीरं सम्मार्ज्य तेन युवकेन दत्तं वस्त्रं धृतवान्।

"मम नाम यतीन्द्रः इति। उद्योगसम्पादनार्थम् अहं गृहात् प्रस्थितः। भवान् कः? कुत्र गन्तुम् उद्युक्तः?" इति पृष्टवान् सः युवकः।

परशुरामः स्वस्य इतिवृत्तं विस्तरेण निवेदितवान्।

तदा यतीन्द्रः मन्दहासपूर्वकम् उक्तवान्– "पश्यतु, समानया नौकया गच्छन्तौ स्वः आवाम्। आवयोः प्रयाणस्य उद्देशः समानः" इति।

अनन्तरं यतीन्द्रः आत्मना आनीतं रोटिकाग्रन्थिम् उद्घाटितवान्। उभौ अपि वार्तालापं कुर्वन्तौ रोटिकाः खादितवन्तौ।

अनन्तरम् आलयं स्वच्छीकृत्य तौ शयनं कृतवन्तौ। शयानः परशुरामः यतीन्द्रम् उक्तवान्– "अद्यावधि उद्योगार्थं मया प्रयत्नः न कृतः। तथापि जनानां मुखात् मया श्रुतं यत् उद्योगप्राप्तिः न सुलभा इति। उत्कोचदानसामर्थ्यम्, उच्चोद्योगिनां परिचयः वा न भवति चेत् उद्योगः गगनकुसुमायते इति श्रूयते" इति।

"तावती निराशा मास्तु मित्र! सामर्थ्यम् अस्ति चेत् उद्योगः अवश्यं प्राप्यते। तत्र सन्देहः एव मास्तु भवतः। मम तु विश्वासः यत् अहम् अचिरात् एव उद्योगं प्राप्स्यामि इति" इति उक्तवान् यतीन्द्रः।

"सामर्थ्यप्रदर्शनार्थम् अत्र अस्ति पश्यतु उत्तमः अवकाशः" इति कश्चन स्त्रीकण्ठस्वरः श्रुतः। अनन्तरक्षणे एव काचित् देवता तत्र प्रत्यक्षा जाता अपि।

परशुरामः यतीन्द्रः च देवीं श्रद्धया नमस्कृतवन्तौ। "अम्ब! आवां निरुद्योगिनौ।

आवाम् अनुग्रहीतुम् एव भवती अत्र प्रत्यक्षा अभवत्। भवत्याः अनुग्रहं प्राप्तुम् आवाभ्यां किं करणीयम्? आदिशतु तावत्'' इति उक्तवन्तौ तौ।

''अहं भवद्भ्यां त्रीणि अपूर्ववस्तूनि दास्यामि। तेषां साहाय्येन इष्टं साधयित्वा इतः तृतीयरात्रौ भवद्भ्यां अत्र उपस्थातव्यम्। भवन्तौ सहैव इतः गन्तुं शक्नुतः। पृथक् पृथगपि गन्तुं शक्नुतः'' इति उक्तवती देवी।

''अनुगृहीताः वयम्। भवत्याः आदेशः यथा तथा करिष्यावः आवाम्'' इति उक्तवन्तौ तौ।

देवी एकैकस्मै एकैकं मृद्घटं यच्छन्ती उक्तवती– ''यं स्मृत्वा भवन्तौ एतं घटं भूमौ पातयतः सः तत्क्षणे भवतोः पुरतः उपस्थितः भविष्यति'' इति।

''आवाभ्यां स्मृतः पुरतः उपस्थितः चेत् आवयोः कः लाभः?'' इति पृष्टवान् यतीन्द्रः।

देवता एकैकस्मै एकैकं मरीचं दत्त्वा उक्तवती– ''एतं मरीचं जग्ध्वा, पुरतः स्थितं यत् प्रार्थयतः तत् ददाति सः'' इति।

''अस्तु तावत्। भवत्या दीयमानं तृतीयं वस्तु किम्?'' इति कुतूहलातिशयेन पृष्टवान् परशुरामः।

देवी एकैकस्मै एकैकं ताम्रकङ्कणं दत्त्वा– ''एतत् कङ्कणं यावत् भवतोः हस्ते भवति तावत्, पूर्वं मया दत्तयोः वस्तुनोः साहाय्येन



यत प्राप्तं तत् भवत्सकाशे एव भविष्यति'' इति उक्तवती, अदृश्या अभवत् च।

प्रातःकालसमये वृष्टिः स्थगिता। यतीन्द्रः परशुरामं पृष्टवान्– ''अहं पूर्वस्यां दिशि गच्छन् अस्मि। मया सह आगच्छति वा भवान्?'' इति।

''न। अहं पश्चिमदिशि गन्तुम् इच्छामि। इतः तृतीये दिने रात्रौ आवाम् अत्र मिलाव'' इति उक्त्वा पश्चिमाभिमुखं निर्गतवान् परशुरामः।

आदिनं प्रयाणं कृत्वा रात्रौ नगरं प्राप्तवान् सः। देव्या यानि वस्तूनि दत्तानि तानि कथम् उपयोक्तव्यानि इति परशुरामेण पूर्वम् एव निश्चितम् आसीत्। अतः सः नगरे प्रासादसदृशस्य कस्यचित् गृहस्य पुरतः



स्थित्वा तद्गृहस्वामिनं स्मरन् बलात् घटं भूमौ पातितवान्।

अल्पे एव काले मध्यवयस्का काचित् द्वारम् उद्घाट्य बहिः आगतवती। तस्याः शरीरे बहूनि सुवर्णाभरणानि आसन्।

परशुरामः मरीचं मुखे स्थापयित्वा जग्ध्वा– "भवत्याः सुवर्णं मन्निकटम् आगच्छतु" इति उक्तवान्।

सा स्त्री निद्रया पीड्यमाना इव वलन्ती– "सुवर्ण! सुवर्ण! सुवर्ण!" इति उच्चैः उक्तवती।

अनन्तरक्षणे एव सुवर्णनामकः घोरः शुनकः उच्चैः भषन् आगत्य परशुरामं पादे अदशत्। परशुरामः प्रयत्नेन यावत् निवारयति चेदपि शुनकः ततः न अपसरति। परशुरामस्य पादः रक्तसिक्तः जातः। स्वामिन्या आहूतः अपि शुनकः न प्रत्यगच्छत्।

तावता परशुरामेण ताम्रकङ्कणं स्मृतम्। सः झटिति कङ्कणम् अपनीय दूरे क्षिप्तवान्। तदा शुनकः तं परित्यज्य अन्तः अगच्छत्। गृहस्वामिनी अपि अन्तः गतवती।

परशुरामः पुनः दिनद्वयं यावत् तस्मिन् एव नगरे स्थित्वा व्रणस्य निमित्तं चिकित्सां प्राप्तवान्। कश्चन कृपालुः वैद्यः निश्शुल्कं चिकित्सां कृतवान्। तृतीयदिने रात्रौ कष्टेन पदानि स्थापयन् अरण्यस्थं जीर्णालयं प्राप्तवान् परशुरामः।

दुरवस्थां प्राप्तवन्तं तं पृष्टवती देवी– "का एषा दुर्गतिः भवतः? किं प्रवृत्तम्?" इति।

परशुरामः नगरे यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण निवेदितवान्।

तावता तत्र यतीन्द्रः आगतवान्। "मया दत्तानि वस्तूनि कथम् उपयुक्तानि भवता?" इति पृष्टवती देवी।

तदा यतीन्द्रः उक्तवान्– "मया पूर्वं यथा निर्णीतं तदनुगुणम् अहम् इतः प्रस्थाय सायङ्कालसमये राज्ञः उद्यानं प्राप्य राजदर्शनं स्मरन् घटं भूमौ पातयित्वा भञ्जितवान्। अल्पे एव काले राजा मम पुरतः आगतवान्। तदा अहं मरीचं मुखे स्थापयित्वा जग्ध्वा– 'प्रभो, राजास्थाने मह्यं

योग्यः उद्योगः दातव्यः' इति प्रार्थितवान्। 'अद्य एव भवान् मम आस्थाने उद्योगे नियुक्तः अस्ति मया' इति उक्तवान् राजा। एवम् अहं राजास्थाने उद्योगं प्राप्तवान्। अनन्तरं राजानं सम्प्रार्थ्य किञ्चित् धनम् ऋणरूपेण प्राप्य गृहं क्रीत्वा तत्र वासं कृतवान्। गृहोपयोगीनि पात्रादीनि अपि क्रीतानि मया। भवत्याः आदेशं स्मरन् अत्र उपस्थितः अस्मि'' इति।

यतीन्द्रस्य कथनम् आश्चर्येण शृण्वन् अस्ति परशुरामः। यतीन्द्रः ताम्रकङ्कणं देव्यै प्रत्यर्प्य पुनः विनयेन उक्तवान्– ''मातः! आत्मशक्तौ दृढः विश्वासः मम। अतः प्राप्तस्य उद्योगस्य आधारेण अहं जीवने यशस्वी भविष्यामि। भवत्या दत्तं तृतीयं वस्तु मह्यं न आवश्यकम्। अतः तत् प्रत्यर्पितवान्। उद्योगात् मम च्युतिः स्यात् इति भीतिः सर्वथा नास्ति मम। श्रद्धायुक्तेन कार्येण प्रामाणिकव्यवहारेण च अहम् उद्योगे स्थिरः भविष्यामि'' इति।

''मया उभाभ्याम् अपि समानानि वस्तूनि दत्तानि। दुराशाग्रस्तः परशुरामः तेषां साहाय्यतः किमपि प्रयोजनं प्राप्तुं न शक्तवान्। यत्र दुराशा भवति तत्र आलस्यं वञ्चनाबुद्धिः च भवति। अतः एव अपूर्वाणि वस्तूनि प्राप्य अपि कष्टे पतितः परशुरामः। मया दत्तस्य मरीचस्य साहाय्येन समग्रं राज्यम् एव प्राप्तुं शक्नोति स्म यतीन्द्रः। किन्तु तेन संयमः प्रदर्शितः। आत्मशक्तौ विश्वस्य उद्योगः केवलं प्रार्थितः'' इति उक्त्वा अदृश्या अभवत् देवता।

अनन्तरदिने ततः राजधानीं प्रति गच्छन् यतीन्द्रः परशुरामम् उक्तवान्– ''मया सह आगच्छतु। यावत् उद्योगः न प्राप्यते तावत् मम गृहे एव तिष्ठतु'' इति।

''इदानीम् एवं करणम् एव शरणं मम। अहं सर्वथा अविवेकी अलसः च। भवतः ज्ञातव्यं बहु अस्ति। मां यथायोग्यम् उपदिशतु कृपया। माम् उत्तमं जनं करोतु'' इति प्रार्थितवान् परशुरामः।



# शुकवचनम्

शिवपुरनामके ग्रामे सोमसुन्दरः नाम कश्चित् आसीत्। गृहे कश्चन शुकः पालनीयः इति तस्य इच्छा। कदाचित् विपणिं गतः सः कस्मिंश्चित् आपणे एकं सुन्दरं शुकं दृष्टवान्। सः आपणिकं पृष्टवान्– "एतस्य शुकस्य किं मूल्यम्?" इति।

"शतं रूप्यकाणि" इति उक्तवान् आपणिकः।

"शतं रूप्यकाणि? कथम् एतत्!" इति आश्चर्येण पृष्टवान् सोमसुन्दरः।

"एषः सामान्यः शुकः न। एतावत् मूल्यम् एषः अर्हति वा न वा इति एतं शुकम् एव पृच्छतु तावत्" इति उक्तवान् आपणिकः।

"आपणिकः भवतः मूल्यं शतं रूप्यकाणि वदति। एतत् मूल्यं किम् उचितम्?" इति शुकं पृष्टवान् सोमसुन्दरः।

"अत्र कः सन्देहः?" इति अवदत् शुकः।

एतेन तृप्तिं प्राप्य सोमसुन्दरः शतं रूप्यकाणि दत्त्वा शुकं क्रीतवान्। महता सन्तोषेण गृहं गतवान् च। तत्र तस्य पत्नीपुत्रादयः शुकं बहून् प्रश्नान् पृष्टवन्तः। सर्वेषाम् अपि प्रश्नानाम् उत्तरम् एकम् एव ददाति शुकः– "अत्र कः सन्देहः?" इति।

इदं सर्वं दृष्ट्वा सोमसुन्दरः ज्ञातवान्– 'शुकः एकम् एव वचनं जानाति। अहं तु अपरीक्ष्य शतरूप्यकमूल्येन शुकं क्रीतवान्। अहं वञ्चितः अभवम्' इति।

अतः सः खेदेन उक्तवान्– "अधिकं मूल्यं दत्त्वा एतं शुकं क्रीणता मया मूर्खता आचरिता। महामूर्खः अहम्" इति।

तदा शुकः अवदत्– "अत्र कः सन्देहः?" इति। शुकस्य एतत् वचनं श्रुत्वा सोमसुन्दरः हसितवान्। पत्नीपुत्रादयः अपि एतं क्षणं पुनः पुनः स्मरन्तः हसितवन्तः।






## ७

(सत्यानन्दमुनिना सृष्टः अपूर्वः समुद्रचोरैः अपहृत्य नीतानां पञ्चानां बालकानां रक्षणार्थं समीरेण सह महामीनान् आरुह्य नौकासमीपं गतवान्। नौकायां क्षुल्लकस्य कारणस्य हेतोः नायकोपनायकयोः कलहः जातः। उपनायकेन नायकः मारितः। समुद्रचोराः तान् बालकान् दासरूपेण विक्रेतुं योजनां कृतवन्तः आसन्। तदनन्तरम्.....)

उपनायकस्य नायकत्वं सर्वे सहचराः विना विरोधम् अङ्गीकृतवन्तः। एतत् दृष्टवतः उपनायकस्य मुखं विकसितम् अभवत्।

उषःकालः अतीतः। पूर्वाचलः अरुणकान्त्या शोभमानः जातः। तदा उपनायकः बालानां प्रकोष्ठं प्रविश्य बालान् उत्थापयन्– "भोः, मित्राणि! उत्तिष्ठन्तु तावत्। समुद्रे दृश्यमानस्य सूर्योदयस्य विलक्षणा शोभा। ताम् अपूर्वां शोभां पश्यन्तः सन्तोषम् अनुभवन्तु। झटिति उत्तिष्ठन्तु तावत्" इति उक्तवान्।

समीरस्य सूचनायाः अनुगुणं गाढनिद्रां प्राप्तवन्तः इव सुप्ताः बालाः जागरणम् अभिनयन्तः मन्दं नेत्रे उन्मील्य परितः पश्यन्तः उत्थितवन्तः। एकः बालकः उपनायकं पृष्टवान्– "वयं कुत्र स्मः? कः भवान्?" इति। अन्येषां मुखे अपि एषः एव प्रश्नभावः स्फुटं दृश्यते स्म।



"अहम् एतस्याः नौकायाः स्वामी। गरलकण्ठः इति मम नाम" इति उक्तवान् उपनायकः।

"यदा वयं नौकां प्रविष्टवन्तः तदा अन्यः कश्चित् 'अहं नौकानायकः' इति वदन् नौकास्थं विशेषं प्रदर्शितवान् खलु? एवं तर्हि नौकानायकः भवान् वा, सः वा?" इति आश्चर्यं प्रकटयन् पृष्टवान् समीरः।

"यदा भवन्तः नौकां प्रविष्टवन्तः तदा सः एव नायकः आसीत्। प्रमुखस्य कार्यस्य निमित्तं सः इतः सुदूरं प्रेषितः। अतः अहम् इदानीं नायकः अस्मि। भवन्तः विशेषादरेण द्रष्टव्याः इति सूचयित्वा गतवान् अस्ति सः। भवन्तः इदानीं नौकायां सन्ति। नौका समग्रतया दृष्टा भवद्भिः। नौका यदा समुद्रे गच्छति तदा समुद्रस्य आकाशस्य च अन्या एव शोभा। सा च शोभा भवद्भिः द्रष्टव्या खलु?" इति उक्तवान् गरलकण्ठः।

समीरः उत्थाय आश्चर्यं प्रकटयन् परितः दृष्ट्वा– "अहो, गृहात् आगतानाम् अस्माकं महान् कालः अतीतः। अस्माभिः इदानीं गृहं गन्तव्यम्" इति उक्तवान्।

अट्टहासः करणीयः इति भावना आगता गरलकण्ठस्य मनसि। तं भावं बलात् निगृह्य सहजस्वरेण उक्तवान् सः– "वस्तुस्थितिः का इति न जानामि अहम्। यदा अस्माकं नायकः इतः प्रस्थितः तदा भवन्तः गाढनिद्रायां लीनाः आसन्। रात्रौ यथासमयं नौका प्रस्थिता। निद्रामग्नान् भवतः उत्थापयितुं न इष्टवान् अहम्। इदानीं प्रातःकालसमयः। नौका च तीरतः सुदूरम् आगता अस्ति। इदानीम् इतः प्रतिगमनं सर्वथा असाध्यम्। समुद्रे महातरङ्गाः, महामीनाः, मकराः, तिमिङ्गिलाः च भवन्ति। अतः तरणेन प्रतिगमनम् अपि असाध्यम्। गृहविचारं विस्मृत्य सन्तोषेण परितः पश्यन्तः समुद्रविहारसुखम् अनुभवन्तु तावत्" इति।

किम् उत्तरं वक्तव्यम् इति अजानन्तः बालाः परस्परं मुखं पश्यन्ति। यः धैर्यवचनानि उक्तवान् सः समीरः एव योग्यम् उत्तरं वदेत् इति चिन्तयित्वा ते समीरं

दृष्टवन्तः।

"इदानीं तर्हि अस्माकं का गतिः? अस्मान् कुत्रापि अपश्यन्तः गृहसदस्याः दिग्भ्रान्ताः खिन्नाः च भवेयुः खलु?" इति चिन्तां प्रदर्शयन् उक्तवान् समीरः।

"यत् प्रवृत्तं तद्विषये अधिकचिन्ता न करणीया। केषाञ्चित् दिनानाम् अनन्तरं वयं पुनरपि तीरं प्राप्स्यामः। तदा अहम् एव भवतां गृहम् आगत्य भवतां मातापितॄणां सान्त्वनं करिष्यामि। अतः चिन्तां मा कुर्वन्तु" इति उक्तवान् गरलकण्ठः।

"वयं तु साहसयात्रायाम् उत्साहिनः एव। किन्तु अस्माकं मातापितॄणाम् एव चिन्ता। ते निश्चयेन चिन्ताक्रान्ताः स्युः एव" इति खेदेन उक्तवान् अन्यः बालकः।

"चिन्ता मास्तु इति उक्तं खलु मया। किञ्चित्कालं ते चिन्ताम् अनुभवेयुः। किन्तु अनन्तरकाले दशगुणितं सन्तोषम् अनुभविष्यन्ति ते" इति हसन् उक्तवान् गरलकण्ठः।

"अस्तु तावत्। ज्येष्ठाः अनुभवशालिनः भवन्तः यथा वदन्ति तथा भवतु नाम" इति उक्तवान् समीरः।

एतेन अङ्गीकारेण गरलकण्ठः नितरां सन्तुष्टः। "आगच्छन्तु तावत्" इति वदन् तैः सह ततः निर्गतवान् सः।

सर्वे सूर्योदयदर्शने मग्नाः आसन्। तदा अपूर्वेण कृतः क्षीणः आह्वानध्वनिः श्रुतः समीरेण। सः मन्दं ततः निर्गत्य निर्जने नौकाभागे स्थितवान्। अवनम्य समुद्रे दृष्टिं





स्थितम् ऐश्वर्यं वशीकर्तुम् इच्छन्ति। कार्यसाधनार्थं ते भवतः उपयोक्तुम् अपि अर्हन्ति। अतः जागरूकतया पदानि स्थापयन्तु भवन्तः। वाणिज्यनौकायाः जनाः अस्माकं साहाय्यं कर्तुम् अर्हन्ति। पश्याम तावत्'' इति।

अवनम्य समुद्रं पश्यन्तं समीरम् उक्तवान् गरलकण्ठः– ''भोः, तथा अवनम्य समुद्रं मा पश्यतु। समुद्रे पतेत् भवान्। समुद्रे पतति चेत् तिमिङ्गिलाः भवन्तं निश्चयेन गिलन्ति। अतः जागरूकः भवतु। अलं समुद्रदर्शनेन। अत्र आगच्छतु तावत्'' इति।

समीरः गरलकण्ठं पश्यन् हसन् बालैः सह मिलितवान्। अनन्तरं सर्वे भोजनार्थम् उपविष्टवन्तः। भोजनसमये गरलकण्ठं पृष्टवान् समीरः– ''नौकायाम् अत्र स्थितानां भवताम् उद्योगः कः? दर्शनेन तु भाति यत् भवतां सर्वेषां धनानुकूल्यं सम्यक् अस्ति इति। एवं तर्हि भवताम् उद्योगः कः?'' इति।

''आं, वयम् आढ्याः वणिजः। दौर्भाग्यवशात् सद्यः एव लुण्ठाकैः वयं लुण्ठिताः अभवाम'' इति उक्तवान् गरलकण्ठः।

''अहो दारुणा गतिः भवताम्'' इति विषादेन उक्तवान् समीरः।

''आम्। इदानीं दयनीया अवस्था अस्माकम्। ते दुष्टाः हठात् आक्रमणं कृत्वा सर्वस्वं लुण्ठितवन्तः'' इति दुःखमिश्रितेन

प्रसारितवान् च।

अनतिदूरे महामीनस्य उपरि स्थितः अपूर्वः दृष्टः समीरेण। समीरं दृष्ट्वा अपूर्वः समीपम् आगतवान्।

महामीनस्य पुच्छस्य उपरि स्थित्वा, समीरः श्रोतुं यथा शक्नुयात् तादृशेन मन्दस्वरेण उक्तवान् अपूर्वः– ''भवन्तः इतः पलायनार्थम् उपायं चिन्तयन्तः सन्ति इति चोरैः ज्ञातं चेत् ते भवतः सर्वान् चित्रहिंसया पीडयित्वा मारयेयुः। अतः जागरूकाः भवन्तु। ते भवद्भिः सह मृदुतया व्यवहरन्तः सन्ति इत्यस्य अर्थः सिध्यति यत् ते भवद्भ्यः किमपि निरीक्षन्ते इति। सद्यः एव वणिजां काचित् नौका समीपम् आगच्छति इति मया तेषां वार्तालापतः ज्ञातम्। ते तस्यां नौकायां

स्वरेण उक्तवान् गरलकण्ठः।

"अहो दुर्विधिः! सज्जनानां भवताम् एतादृशी दुर्गतिः न भवेत्। भवन्तः सज्जनाः इत्यतः अस्मान् एवं विहारार्थं नयन्तः सन्ति। उपाहार-भोजनदानादिभिः सत्कुर्वन्तः सन्ति। तदस्तु, इदानीं भवताम् अग्रिमयोजना का?" इति पृष्टवान् समीरः।

"प्रथमं समीपस्थं कञ्चित् द्वीपं प्राप्स्यामः। तत्र गत्वा धनसम्पादनमार्गं चिन्तयिष्यामः" इति उक्तवान् गरलकण्ठः।

"वयं वणिजः इति वदन्ति भवन्तः। किन्तु नौकायां वस्तूनि एव न दृश्यन्ते खलु? एवं स्थिते धनसम्पादनं केन मार्गेण करिष्यन्ति भवन्तः?" इति पृष्टवान् समीरः।

"युक्तः प्रश्नः पृष्टः भवता। बालस्यापि भवतः बुद्धिमत्ता तीक्ष्णा अस्ति। अस्माकं समीपे वस्तूनि न सन्ति इति तु सत्यम्। तथापि धनसम्पादनार्थं मार्गं जानीमः वयम्। भवन्तः यदि साहाय्यं कुर्युः तर्हि धनसम्पादने न कोऽपि क्लेशः" इति हसन् उक्तवान् गरलकण्ठः।

"समुद्रमध्ये कथं वा धनं सम्पादयितुं शक्येत? वयं बालाः कथं वा अत्र साहाय्यं कर्तुं शक्नुयाम? आश्चर्यकरम् अस्ति भवतः वचनम्" इति उक्तवान् समीरः।

"अस्माकं नौकां ये लुण्ठितवन्तः ते लुण्ठाकाः सद्यः एव एतेन मार्गेण आगमिष्यन्ति। यदा ते समीपम् आगमिष्यन्ति



तदा वयं विषादसूचकं कृष्णवर्णीयं ध्वजम् उड्डाययिष्यामः। तदा भवन्तः सर्वे नौकायाः पार्श्वभागे स्थित्वा "रक्षन्तु, रक्षन्तु" इति उच्चैः आक्रोशनं कुर्युः" इति एतावत् उक्त्वा सर्वेषां बालानां मुखानि दृष्टवान् गरलकण्ठः।

"एवं करणेन कः लाभः सेत्स्यति?" इति पृष्टवान् समीरः।

"भवताम् आक्रोशनं श्रुत्वा वणिग्वेषधारिणः ते लुण्ठाकाः साहाय्यार्थं समीपम् आगमिष्यन्ति। तदा भवन्तः– 'दुष्टाः केचन लुण्ठाकाः हठात् आक्रमणं कृत्वा अस्मदीयान् सर्वान् मारयित्वा धनादिसर्वस्वं नीतवन्तः' इति रोदनपूर्वकं वदन्तु। भवतां विलपनं श्रुत्वा तेषु केचन अस्माकं नौकाम्



स्थितवान्। अनन्तरं दीर्घं निश्श्वस्य उक्तवान् सः– "ते दुष्टाः यत् दौष्ट्यम् आचरितवन्तः तदर्थं ते निर्दयं मारिताः चेदपि न दोषः। किन्तु तान् मारयितुं न इच्छामि अहम्। तान् सर्वान् बन्धने स्थापयिष्यामि, तेषां नौकां स्वाधीनीकरिष्यामि च। अनन्तरं तान् दासरूपेण विक्रेष्यामि। मारणस्य अपेक्षया अपि दासरूपेण विक्रयणं दयापूर्णं कार्यं खलु?" इति।

तावता गरलकण्ठस्य आप्तसाहाय्यकः अन्तः आगत्य– "नौका अनतिदूरे दृश्यते" इति उक्तवान्।

"साधु! अस्माकं नौकां वेगेन तेषां नौकायाः समीपं नयन्तु। यदा तन्नौकास्थाः जनाः दृश्यन्ते तदा अरित्रं बालानाम् अधीनं कृत्वा भवन्तः सर्वे प्रकोष्ठे निलीय तिष्ठन्तु। सर्वे जागरूकतया व्यवहरन्तु। केनापि अल्पः प्रमादः अपि न करणीयः" इति सूचितवान् गरलकण्ठः।

गरलकण्ठः अन्ये बालाः च प्रकोष्ठतः बहिः आगतवन्तः। अनतिदूरे वणिजां नौका दृष्टा। एतेषां नौका वायुवेगेन गच्छन्ती अस्ति। यदा वणिजां नौका समीपम् आगता तदा गरलकण्ठस्य कथनस्य अनुसारं चोराः अरित्रं बालाधीनं कृत्वा निलीय स्थितवन्तः।

समीरः नौकायाः उपरितनं भागम् आरुह्य वणिजः यथा द्रष्टुं शक्नुयुः तथा स्थितवान्। तदा तेन दृष्टं यत् कश्चन समुद्रकाकः

आगमिष्यन्ति। तान् भवन्तः अस्माकं प्रकोष्ठम् आनयन्तु। तत्र यत् करणीयं तत् करिष्यामः वयम्" इति उक्तवान् गरलकण्ठः।

"अपूर्वः उपायः एषः" इति उक्तवान् कश्चन बालकः। "आम्, आम्" इति उक्तवन्तः अन्ये बालकाः।

"वयं यथा वदामः तथा आचरिष्यन्ति चेत् भवतः सर्वान् विशेषतः सत्करिष्यामः वयम्" इति उक्तवान् गरलकण्ठः।

"वयम् एतत् कर्तुं सिद्धाः। वयं तान् भवतां समीपं प्रेषयिष्यामः चेत् भवन्तः तान् किं करिष्यन्ति?" इति कुतूहलेन पृष्टवान् समीरः।

गरलकण्ठः क्षणकालं गाम्भीर्येण मौनं

तदीयनौकातः वणिङ्नौकां प्राप्नोत् इति। काकस्य द्वारा अपूर्वेण कोऽपि सन्देशः प्रेषितः स्यात् इति तर्कितवान् समीरः।

तावत्पर्यन्तं सहचरैः कृतं कार्यं परिशील्य दण्डे कृष्णवर्णीयं ध्वजं बद्ध्वा– "भोः, ते वणिग्वेषधारिणः भवता एव अस्मत्प्रकोष्ठम् आनेतव्याः। एतत् भवतः दायित्वम्" इति आदिश्य प्रकोष्ठं प्रविश्य सहचरैः सह उपविष्टवान् गरलकण्ठः।

समीरः उच्चध्वनिना आक्रोशनं कृतवान्– "रक्षन्तु भोः, रक्षन्तु" इति।

एतत् आक्रोशनं श्रुत्वा वणिङ्नौका-प्रकोष्ठतः आढ्यः वणिक् कश्चित् बहिः आगतवान्। तम् उभयतः दृढकायाः केचन अङ्गरक्षकाः आसन्।

"एतस्यां नौकायां वयं षट् बालकाः केवलं स्मः। समुद्रचोराः अस्मदीयान् सर्वान् मारितवन्तः। कृपया रक्षन्तु अस्मान्" इति पुनरपि उक्तवान् समीरः।

अनन्तरक्षणे वणिजां नौका एतेषां नौकायाः अतिसमीपम् आगता। द्वित्राः दृढकायाः दीर्घं दृढं काष्ठफलकं सेतुरूपेण नौकयोः मध्ये स्थापयित्वा सम्पर्कं कल्पितवन्तः। तदाधारेण सः आढ्यः पुरुषः चोरनौकाम् आगतवान्। दृढकायाः केचन तम् अनुसृत्य आगतवन्तः। सः आढ्यः वणिक् समीरस्य समीपम् आगत्य–, "ते दुष्टाः कुत्र? प्रदर्शयतु तावत्" इति उक्तवान्।



चोरैः यत्र निगूह्य स्थितं तं प्रकोष्ठं प्रदर्श्य समीरः– "आगच्छन्तु श्रीमन्! चोराणां चौर्यस्य अनन्तरम् अपि अवशिष्टानि कानिचन आभरणानि प्रकोष्ठे सन्ति। तानि भवन्तः एव स्वीकुर्वन्तु नाम। अस्मान् तु सकुशलं गृहं प्रापयन्तु" इति उक्तवान्।

"चिन्तां मा कुर्वन्तु भवन्तः। भवतां रक्षणार्थम् एव आगताः स्मः वयम्" इति उक्त्वा सः आढ्यः वणिक् समीरेण प्रदर्शितस्य प्रकोष्ठस्य समीपं झटिति गत्वा द्वारं पिधाय बहिस्तात् तालेन कीलितवान्।

अनन्तरं वातायनद्वारा अन्तः दृष्टिं प्रसार्य– "भोः दुष्टाः! अद्य भवतां पापघटः पूर्णः इति भावयन्तु। मया सह विंशतिः

दृढकायाः सहचराः सन्ति। ते एतं प्रकोष्ठं परितः आयुधं धृत्वा तिष्ठन्ति। यदि कश्चित् विरोधं प्रदर्शयेत्, कश्चित् पलायनार्थं प्रयत्नं वा कुर्यात्, तर्हि सः निर्दयं मार्यते अस्माभिः। समूहप्रयत्नः कोऽपि भवद्भिः कृतः चेत् समग्रां नौकां दहामः वयम्। यतः तावान् तैलसङ्ग्रहः अस्माकं समीपे अस्ति एव। श्वः सायङ्कालाभ्यन्तरे वयं तीरं प्राप्स्यामः। तावत्पर्यन्तं कोऽपि आहारः न दीयते भवद्भ्यः। पानार्थं तदा तदा जलं दीयते, तावदेव। प्राणाः प्रियाः चेत् वयं यथा वदामः तथा आचरन्तु" इति उक्तवान्।

यत्र चोराः बन्धने स्थापिताः तं प्रकोष्ठं परितः दश दृढकायाः आयुधानि गृहीत्वा रक्षणार्थं स्थितवन्तः। अन्ये केचन दृढाभिः रज्जुभिः चोरनौकां स्वनौकया सह योजितवन्तः।

'अत्रान्तरे अपूर्वः कुत्र?' इति परीक्षादृष्ट्या परितः पश्यन् अस्ति समीरः। तदा वणिक्प्रमुखः तस्य समीपम् आगत्य तस्य स्कन्धस्य उपरि स्वस्य हस्तं स्थापयन् पृष्टवान्– "वत्स! काकद्वारा सन्देशं प्रेषयितुं कथं शक्तवान् भवान्?" इति।

"स च सन्देशः मया न प्रेषितः श्रीमन्! अस्माकं रक्षकेण केनचित् दिव्यपुरुषेण सः सन्देशः प्रेषितः। सः दिव्यपुरुषः आकारेण अत्यल्पः। दैवांशसम्भूतस्य तस्य सामर्थ्यं तु मेरुतुल्यम्। परोपकारः तस्य स्वभावसहजः गुणः। कीर्तिकामनारहितः सः सदापि प्रशंसाविमुखः" इति उक्तवान् समीरः।

"सः महानुभावः इदानीं कुत्र अस्ति?" इति कुतूहलातिशयेन पृष्टवान् वणिक्प्रमुखः।

"तत् अहम् अपि न जानामि। एतावत् तु जानामि यत् अस्माभिः यद्यत् क्रियते तत्सर्वं तेन दूरात् सूक्ष्मदृष्ट्या दृश्यते इति। अचिरात् एव सः अस्माकं सम्मुखम् आगच्छेत् अपि" इति उक्तवान् समीरः।

वणिजां नौका चोरनौकया सह तीरं प्रति वेगेन अगच्छत्। –(अनुवर्तते)





# राजप्रियः अच्युतः

यतः त्रिविक्रमः स्वप्रवृत्तितः विमुखः न भवति ततः मया अपि मत्प्रवृत्तितः विमुखेन न भवितव्यम् इति चिन्तयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! दिने अल्पाम् एव विश्रान्तिं स्वीकृत्य, राजकार्यादिकं विना लोपं निरुह्य, यथापूर्वम् अत्र आगच्छतः भवतः व्यवहारः श्लाघ्यः एव। भवान् यद्यत् कुर्वन् अस्ति तत् किन्निमित्तम्? स्वनिमित्तम्, उत अन्यनिमित्तम्? अन्यनिमित्तं चेत् सः अन्यः कः? आत्मीयमित्रं वा सः? मित्रं यथा आत्मीयतापात्रं तथैव विश्वासपात्रम् अपि इति भावयति वा भवान्? तथा चेत् भवतः

## वेतालकथा



चिन्तनं दोषपूर्णम् इत्येव निर्णेतव्यं भवति भवता। अत्र राजा हरदत्तः एव उदाहरणम्। हरदत्तकथां विस्तरेण श्रावयामि। मार्गायासपरिहारार्थं श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा—

महेन्द्रगिरिराज्यस्य राजा शिवदत्तः। तस्य एकमात्रपुत्रः हरदत्तः। 'दैवानुग्रहात् एव मम पुत्रः जातः। एषः सकलासु विद्यासु पारङ्गतः यथा स्यात् तथा करणीयम्' इति आलोच्य शिवदत्तः स्वपुत्रं चित्रारण्यस्थस्य आशुतोषस्य गुरुकुलं प्रति प्रेषितवान्।

गुरुकुले हरदत्तः श्रद्धया विद्याभ्यासं करोति। विभिन्नाभ्यः दिग्भ्यः आगताः बहवः विद्यार्थिनः गुरुकुले विद्याभ्यासं कुर्वन्ति। तथा आगतस्य अच्युतस्य हरदत्तस्य च मध्ये गाढा मैत्री उत्पन्ना। अच्युतस्य स्वाभिमानयुक्तः व्यवहारः हरदत्ताय नितराम् अरोचत। अतः हरदत्तः अच्युतं विशेषतः इच्छति।

कानिचन वर्षाणि अतीतानि। कदाचित् गुरुः आशुतोषः हरदत्तं स्वसमीपम् आहूय— ''वत्स! यद्यत् पठनीयं तत्सर्वं पठितं भवता। इतः परं तु अनुभवबलात् भवता ज्ञानं सम्पादनीयम्। यदा भवान् राजा भविष्यति तदा न्याय्येन मार्गेण प्रजाः पालयन् सत्कीर्तिं प्राप्नोतु'' इति आशीर्वादं कृतवान्।

राजधानीं प्रस्थितः हरदत्तः अच्युतं प्रीत्या आलिङ्ग्य— ''मित्र! वियोगदिनम् उपस्थितम् अस्ति। वस्तुतः आवयोः वियोगः मयि महान्तं खेदं जनयति। किन्तु वियोगः तु अनिवार्यः। मम स्मरणार्थम् एतत् स्वीकरोतु कृपया'' इति वदन् स्वकण्ठे स्थितं मणिहारं अच्युताय दातुम् उद्युक्तः।

हारस्वीकारं निराकुर्वन् अच्युतः हरदत्तं मन्दहासपूर्वकम् उक्तवान्— ''माणिक्यहारापेक्षया स्नेहः अमूल्यः। स च स्नेहः विच्छिन्नः मा भवतु'' इति।

''स्नेहः अमूल्यः, सत्यम्। स्नेहस्य द्योतकः एषः मणिहारः भवता अवश्यं स्वीकरणीयः'' इति वदन् बलात् मणिहारम् अच्युतस्य कण्ठे स्थापितवान् हरदत्तः।

अनन्तरं पुनरपि अच्युतम् आलिङ्ग्य— "सर्वदा मां स्मरतु भवान्। आवश्यकतायां सत्यां निस्सङ्कोचं मां पश्यतु च" इति उक्त्वा अन्येषां सहपाठिनाम् अनुज्ञां प्राप्य राजधानीं गतवान् हरदत्तः।

ततः एकवर्षाभ्यन्तरे राजा शिवदत्तः सुमुहूर्ते हरदत्तं पट्टाभिषिक्तं कृतवान्।

अच्युतः अपि विद्याभ्यासस्य अनन्तरं गुरुकुलात् निर्गत्य उद्योगान्वेषणं कृतवान्। अल्पे एव काले कस्यचित् भूस्वामिनः आस्थाने लघूद्योगः प्राप्तः तेन।

विद्यानुगुणः उद्योगः न एषः। किन्तु ततः यत् धनं प्राप्यते तत् अच्युतस्य उदरम्भरणार्थं पर्याप्तं भवति स्म। अतः तृप्तः अस्ति अच्युतः।



अच्युतस्य पितुः मित्रं शिवरामः नाम वृद्धः। सः कदाचित् अच्युतसमीपम् आगत्य— "वत्स! मां भवान् अभिजानीयात् इति भावयामि। एतेषु दिनेषु अहं व्याधिना ग्रस्तः। यावत् धनम् आसीत् तत्सर्वं चिकित्सार्थं व्ययितम्। इदानीम् अहं सर्वथा निर्धनः। मम पुत्रः निरुद्योगी अस्ति। महाराजः भवतः आत्मीयः इति श्रूयते। अतः मम पुत्राय कुत्रापि लघूद्योगं दापयतु कृपया" इति निवेदितवान्।

अच्युतः शिवरामस्य पुत्रेण प्रशान्तेन सह राजधानीं गत्वा राजानं हरदत्तं दृष्टवान्। प्रशान्तस्य गृहस्य दुःस्थितिं विस्तरेण निवेदितवान् च। प्रशान्तं भटोद्योगे नियोजितवान् राजा। अनन्तरं सः अच्युतस्य कुशलवार्तां पृष्टवान्। अच्युतः आत्मना क्रियमाणम् उद्योगं निवेद्य— "तृप्त्या जीवामि अहम्" इति उक्तवान्।

'अच्युतः प्रशान्ताय भटोद्योगं दापितवान्' इति वार्ता सर्वत्र प्रसृता। 'मैत्रीकारणतः राजा अच्युतस्य वचनं पुरस्करोति' इति जनाः ज्ञातवन्तः।

अच्युतस्य ग्रामे जातः बलरामः राजास्थाने उद्योगी। कदाचित् सः उत्कोचस्वीकरण-समये अधिकारिभिः गृहीतः अभवत्। सः अच्युतसमीपम् आगत्य— "श्रीमन्! आवां बाल्यतः आत्मीयौ किल? भवान् राजानम्



उक्त्वा एतत्सन्दर्भे सः मां क्षमया यथा अनुगृह्णीयात् तथा करोतु कृपया। भवतः उपकारम् आजीवनं स्मरिष्यामि अहम्'' इति दैन्येन प्रार्थितवान्।

''मित्र, क्षाम्यतु माम्। मम महाराजस्य च मैत्री अस्ति, सत्यम्। किन्तु एतादृशकार्यस्य निमित्तं तस्याः मैत्र्याः उपयोगं कर्तुं न इच्छामि अहम्'' इति उक्त्वा बलरामं ततः प्रेषितवान् अच्युतः।

गूढचरद्वारा राज्ञा एषा वार्ता ज्ञाता। मित्रस्य न्यायप्रियतां सत्यसन्धतां च दृष्ट्वा सः नितरां सन्तुष्टः।

अत्रान्तरे चन्द्रनाथः नाम वणिक् अच्युतसमीपम् आगत्य निवेदितवान्— ''श्रीमन्! अस्माकं राज्ये कार्पासोपचयः न्यूनः इति भवान् जानाति एव। प्रतिवेशिराज्ये कार्पाससमृद्धिः इति श्रूयते। यदि वयं ततः कार्पासं क्रीत्वा वस्त्रं निर्माय विक्रयणं कुर्याम तर्हि प्रजाः अल्पेन मूल्येन वस्त्राणि प्राप्तुं शक्नुयुः। किन्तु प्रतिवेशिराज्यतः कार्पासस्य आनयनार्थं राज्ञः अनुमतिः आवश्यकी। भवान् यदि प्रयत्नं कुर्यात् तर्हि राजा अवश्यम् अनुमतिं दद्यात्। अतः एतस्मिन् कार्ये साहाय्यं करोतु कृपया। प्रतिफलरूपेण अहं भवते प्राप्यमाणे लाभे अर्धं भागं दास्यामि'' इति।

अच्युतः क्षणकालम् आलोच्य— ''उत्तमं कार्यं कर्तुम् उद्युक्तः भवान्। अतः अवश्यं साहाय्यं करिष्यामि। किन्तु लाभांशे कोऽपि भागः मास्तु मम'' इति उक्त्वा राजानं दृष्ट्वा कार्पासानयनविचारं निवेदितवान्। राजा मन्त्रिभिः सह समालोच्य सन्तोषेण अनुमतिपत्रं दत्तवान्।

अनुमतिपत्रं प्राप्य वणिक् चन्द्रनाथः प्रतिवेशिराज्यतः कार्पासं महता प्रमाणेन आनायितवान्। वस्त्राणां वयनार्थम् अपि महती व्यवस्था कृता। योग्येन मूल्येन तेन वस्त्राणि विक्रीतानि। अतः जनाः अल्पेन मूल्येन वस्त्राणि प्राप्तुं शक्तवन्तः। एतस्मात् वाणिज्यतः प्रभूतं लाभं प्राप्तवान् चन्द्रनाथः।

सानुरोधं दत्तं चेदपि अच्युतः चन्द्रनाथतः अल्पम् अपि धनं न स्वीकृतवान्। गूढचरद्वारा राजा एतां वार्ताम् अपि ज्ञातवान्।

एतदनन्तरम् अच्युतस्य कीर्तिः बहुत्र

प्रसृता। बहवः आगत्य कष्टं निवेद्य 'महाराजम् उक्त्वा एतत् कार्यं कारयतु कृपया' इति प्रार्थितवन्तः। किन्तु एवम् आगतेषु स्वार्थसम्पादनार्थम् आगताः एव बहवः। अतः अच्युतः तान् निराशान् कृतवान्। महाराजस्य यः स्नेहः अस्ति सः एवं पीडायै भवेत् इति तेन न तर्कितम् आसीत्।

अच्युताय यः उद्योगं दत्तवान् तस्य भूस्वामिनः नाम धर्मदीपः इति। यदा अच्युतः उद्योगार्थम् आगतः तदारभ्य तदीयं व्यवहारं परिशीलयन् आसीत् सः। अच्युतस्य प्रामाणिकव्यवहारेण, लोकोपकारबुद्ध्या, सत्यप्रियतया च सन्तुष्टः भूस्वामी चिन्तितवान् यत् एषः मम जामाता चेत् वरं भवेत् इति।

कदाचित् धर्मदीपः स्वविचारम् अच्युतं निवेदितवान्। तदा अच्युतः झटिति उक्तवान्– "क्षन्तव्यः अहम्। भवतः पुत्रीं परिणेतुं न अर्हामि अहम्" इति।

किन्तु एतावता धर्मदीपः तूष्णीं न स्थितः। सः कदाचित् भोजनसत्कारं व्यवस्थापितवान्। तत्र बहवः पुरप्रमुखाः उपस्थिताः आसन्।

तत्समये भूस्वामी धर्मदीपः अच्युतं पार्श्वे आहूय– "महाराजाय मया कररूपेण बहु धनं दातव्यम् अस्ति। किन्तु अन्येभ्यः आगन्तव्यं धनं समये न प्राप्तम् इत्यतः मया अद्यावधि करः न दत्तः। एतदर्थं महाराजः



कठिनान् क्रमान् आश्रयति इति श्रूयते। अतः भवान् महाराजम् उक्त्वा किञ्चित् समयावकाशं दापयतु कृपया" इति निवेदितवान्।

"करः समये दातव्यः एव। अन्यसमस्याः सन्ति इत्यतः करदाने यः विलम्बः कृतः सः अक्षम्यः अपराधः। अतः इदानीं वा भवान् करं दत्त्वा महाराजं स्वयं क्षमां प्रार्थयतु। अहं तु एतद्विषये किमपि साहाय्यं कर्तुं न शक्नोमि" इति उक्तवान् अच्युतः।

"अच्युत! क्लेशाः सर्वान् अपि पीडयन्ति एव। महाराजव्यवहारम् एव पश्यतु तावत्। वृद्धेभ्यः विधवाभ्यः च साहाय्यधनं दीयते इति तेन घोषणं कृतम्। किन्तु तत् अद्यावधि न दत्तम्। किमर्थम्? धनाभावतः। मया करदाने



विलम्बः यः कृतः सः दोषाय चेत् महाराजेन यः विलम्बः कृतः सः अपि दोषाय एव इति वक्तव्यं खलु? तथा वक्तुं सिद्धः वा भवान्?" इति पृष्टवान् धर्मदीपः।

"महाराजेन वृद्धेभ्यः विधवाभ्यः यत् दातव्यम् आसीत् तस्य दाने यः विलम्बः कृतः सः निश्चयेन दोषाय एव। राज्ञा दोषः कृतः इति अन्यैः अपि दोषः करणीयः इति चिन्तयति वा भवान्? एतत् तु अनुचितं चिन्तनम्" इति उक्तवान् अच्युतः।

तदा धर्मदीपः उक्तवान्– "अच्युत! अत्र महाराजस्य गूढचराः अपि उपस्थिताः सन्ति। ते आवयोः सम्भाषणं श्रुतवन्तः स्युः। महाराजं निवेदयेयुः अपि। महाराजस्य व्यवहारे दोषम् उद्भावयतः भवतः स्नेहं परित्यजेत् राजा" इति।

"महाराजस्य स्वभावम् अहं सम्यक् जानामि। दोषम् उद्भावयते मह्यं न कुप्यति सः। अपि तु स्वव्यवहारस्य दोषं जानन् दोषदूरीकरणार्थं प्रयत्नं करोति सः" इति सधैर्यम् उक्तवान् अच्युतः।

तदा धर्मदीपः उक्तवान्– "तर्हि एवं भवतु। भवान् गत्वा महाराजं पश्यतु। सः भवतः व्यवहारं दृष्ट्वा सन्तोषं प्रकटयति चेत् अहं भवन्तम् अभिनन्दामि। किन्तु सः कोपं प्रदर्शयति चेत् भवता पराजयम् अङ्गीकृत्य मम पुत्री परिणेतव्या" इति।

अच्युतः एतत् अङ्गीकृत्य राज्ञः हरदत्तस्य समीपं गतवान्। राजा अच्युतं दृष्ट्वा महान्तं कोपं प्रदर्शयन्– "अच्युत! मम व्यवहारे अपि दोषम् उद्भावयतः भवतः कियत् औद्धत्यम्! स्तरभेदम् अविगणय्य भवतः मैत्री पुरस्कृता मया। तत् सर्वत्र उद्घुष्टवान् भवान्। एतादृशस्य मदोन्मत्तस्य भवतः मैत्रीम् अहं न इच्छामि। निर्गच्छतु इतः" इति तर्जितवान्।

अच्युतः ततः प्रत्यागत्य धर्मदीपं प्रवृत्तं समग्रं निवेदितवान्। तदीयां पुत्रीं परिणीतवान् चापि।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! अल्पे उद्योगे तिष्ठन् अपि अच्युतः उच्चोद्योगार्थं महाराजम् अप्रार्थयन् अन्येषां साहाय्यार्थं महाराजं बहुवारं प्रार्थितवान्।

"उत्कोचग्राही स्नेहितः चेदपि तदीया प्रार्थना तिरस्कृता तेन। वणिजा चन्द्रनाथेन दत्तं लाभांशम् अपि विनयेन तिरस्कृतवान् सः। एतत् सर्वं जानन् अपि राजा हरदत्तः अच्युतस्य वचनस्य यथार्थतां ज्ञातुं प्रयत्नम् अकुर्वन् अच्युतं निन्दितवान्। एवं तर्हि राजा किम् अविवेकी? अथवा महती मूर्खता तस्य? अथवा अन्यत् एव कारणं स्यात् वा? मम एतस्य सन्देहस्य योग्यं परिहारं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "अध्ययनकालात् अपि हरदत्तः अच्युतस्य व्यवहारं सुसूक्ष्मं परिशीलयन् अस्ति। राजपदवी-प्राप्त्यनन्तरम् अपि सः अच्युतस्य व्यवहारं परिशीलितवान् एव। अतः अच्युतस्य प्रामाणिकता, पक्षपातराहित्यं, सत्यप्रियता इत्यादयः गुणाः तेन सम्यक् अवगताः एव। एवं स्थिते अपि विवेकी राजा अच्युतस्य व्यवहारे अनौचित्यं दृष्ट्वा कोपं प्रकटितवान् इत्यत्र न विश्वासः। वस्तुतस्तु तस्य कोपस्य कारणम् अन्यत् एव। भूस्वामिपुत्री अच्युतेन परिणीता चेत् तस्यैव उन्नतिः स्यात् इति राजा चिन्तितवान्। भूस्वामी धर्मदीपः अत्र महाराजस्य साहाय्यं प्रार्थितवान् स्यात् इति ऊहां कर्तुं शक्नुमः वयम्। धनस्तरं मनसि स्थापयता अच्युतेन एषः विवाहः निराकृतः आसीत्। इदानीं तु स्ववचनैः एव बद्धः सह भूस्वामिपुत्रीं परिणीतवान्। एतेन अच्युतस्य हितं सेत्स्यति इति निश्चित्य एव राजा कृत्रिमं कोपं प्रदर्शितवान्। अनन्तरकाले सः कोपस्य कृत्रिमतां निवेद्य अच्युतस्य मैत्रीं सम्पादितवान् स्यात् इति तर्कयामः वयम्। एवं राजा न अविवेकी। उपायेन सः मित्रस्य साहाय्यम् एव कृतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्; अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् आलम्बितवान्।



# अहो कृपणता!

जगदीशः कश्चन भूस्वामी, किन्तु महाकृपणः। देवे भक्तिः तस्य अधिका। अतः सः तदा तदा मन्दिरं गच्छति। किन्तु मन्दिरे देवाय कदापि नारिकेल-कदलीफलादीनि धनं वा न समर्पयति सः। अर्चकाय दक्षिणाम् अपि न ददाति। पादरक्षारक्षकाय अपि किञ्चिदपि न ददाति सः।

अर्चकः पादरक्षारक्षकः इत्यादयः जगदीशस्य कृपणतां सम्यक् जानन्ति एव। अतः जगदीशेन किमपि न दत्तं चेदपि ते मौनं तिष्ठन्ति।

कस्मिंश्चित् पर्वदिने भूस्वामी प्रभाते मन्दिरं गतवान्। तस्मिन् दिने मन्दिरं सर्वप्रथमम् आगतः भक्तः सः एव। पूजायाः अनन्तरम् अर्चकस्य नीराजनपात्रे एकपैसानाणकं स्थापितवान् सः।

दिनस्य आरम्भे एव एतादृशी अल्पा दक्षिणा प्राप्ता इत्यतः अर्चकः नितरां खिन्नः। खेदं सोढुम् अशक्नुवन् सः भूस्वामिनम् उक्तवान्– "श्रीमन्! भवान् तु महाधनिकः। एतादृशात् भवतः एकपैसात्मिकां दक्षिणां प्राप्नुवतः मम अपमाननं भवति। अतः पुनरपि एतावदेव वा ददातु कृपया" इति।

एतत् श्रुतवतः भूस्वामिनः कोपः आगतः। सः कोपेन– "पुनरपि एतावत् दत्त्वा भवतः अपमाननं द्विगुणितं कर्तुं न इच्छामि अहम्। वस्तुतस्तु भवतः अपमाननम् एव मम खेदाय" इति उक्त्वा पूर्वं यत् एकपैसात्मकं धनं दत्तम् आसीत् तदपि स्वीकृत्य ततः निर्गतवान्।



# ज्ञानभाण्डागारम्



अस्माकं देवताः

## म हा का ली

सृष्टि-स्थिति-लयानां कारणीभूता शक्तिः अस्माकं प्राचीनैः मुनिभिः विभिन्नैः प्रकारैः दृष्टा। निर्मलप्रशान्तवदना शिष्टरक्षिका दिव्या मातृशक्तिः भयानकं रूपं धृत्वा दुष्टनिग्रहणम् अपि करोति। अस्माकं पूर्वजानां विश्वासः आसीत् यत् दिव्यशक्तेः सङ्कल्पानुसारं समस्तस्य जगतः सृष्टिः यथा भवति तथैव विलयः अपि भवति इति।

महाकाली कृष्णवर्णीया। व्याघ्रचर्मधारिणी एषा कण्ठे कपालमालां धरति। चतुर्भिः हस्तैः भीकराणि आयुधानि धृतवती एषा भयजनकेन रूपेण विराजते। एषा एवं यद्यपि आकारेण घोरा, तथापि भक्ताः एतस्याः भीताः न भवन्ति। भक्तानां दृढः विश्वासः यत् भक्त्या ये तां पूजयन्ति तान् एषा माता रक्षति, सर्वेषु कार्येषु विजयम् उत्साहं च ददाति इति।

लोककण्टकानां दुष्टानां दमनार्थम् अवतारं प्राप्तवत्याः महाकाल्याः जन्मदिनाचरणं विजयदशमीदिने महता आनन्देन उत्साहेन च कुर्वन्ति भक्ताः।




# त्रयोदशवर्षीयः स्नातकपदवीधरः

बालमुरलीकृष्णः अम्बटी सद्यः वार्ताविषयः अस्ति। एषः भारतीयमूलः अमेरिकावासी विद्यार्थी। सद्यः एव एतस्मै न्यूयार्कविश्वविद्यालयेन जीवशास्त्रे पदवी दत्ता। एवं पदवीं प्राप्तवतः एतस्य वयः केवलं १३ वर्षाणि! षष्ट्यधिकशतवर्षात्मकेन इतिहासेन युक्तात् एतस्मात् न्यूयार्कविश्वविद्यालयात् पदवीं प्राप्तवत्सु अल्पवयस्कः एषः एव।

गते 'मे'मासे विश्वविद्यालयेन प्रचालिते घटिकोत्सवे दशसहस्रं पदवीधराः पदवीः प्राप्तवन्तः। बालमुरलीकृष्ण अम्बटी तु पदवीं 'सिल्वर्टार्च्'पारितोषिकं चापि प्राप्तवान्।

एतस्य बालस्य मातापितरौ अस्माकं देशे अध्यापकवृत्तौ निरतौ स्तः। विकसितस्य पुष्पस्य गन्धः यथा सुदूरं प्रसरति तथैव बालमुरलीकृष्णः चतुर्थे वयसि एव 'क्यालुकलस्' प्राथमिकसिद्धान्तान् निर्दुष्टं जानाति स्म। बालस्य बुद्धिमत्तां जानन्तौ तदीयमातापितरौ अध्ययने तं विशेषतः प्रोत्साहितवन्तौ।

बालमुरलीकृष्णः यदा द्वादशवर्षीयः आसीत् तदा एव अष्टादशवर्षीयेण अग्रजेन जयकृष्णेन सह मिलित्वा 'एड्स्' इति विषयम् अधिकृत्य एकं ग्रन्थं प्रकाशितवान् आसीत्। तत्समये एव तेन विश्वविद्यालयस्य प्रवेशार्थम् आवेदनपत्रं प्रेषितम् आसीत्।

इस्रायिल्देशस्य कश्चन युवकः अष्टादशे एव वयसि विद्यावारिधिपदवीं (डाक्टरेट्) प्राप्तवान् आसीत्। 'अत्यल्पवयस्कः डाक्टरेट्पदवीधरः' इति तस्य कीर्तिः अस्ति। अतः अष्टादशवयसः पूर्वम् एव डाक्टरेट्पदवीं प्राप्य अपूर्वा कीर्तिः प्राप्तव्या इति बालमुरलीकृष्णस्य आकाङ्क्षा।

बालमुरलीकृष्णस्य आकाङ्क्षा सफला भवतु इति आशास्महे वयम्।

# भवन्तः जानन्ति वा?

१. केन प्राचीनेन भारतीयेन शून्यम् अन्विष्टम्?
२. 'जलाश्वः' न अश्वजातीयः। एवं तर्हि कः सः?
३. टोकियोनगरस्य प्राचीनं नाम किम् आसीत्?
४. क्रि.श. ३१२ तमे वर्षे कान्स्टाण्टिन्चक्रवर्तिना व्यवहारे आनीतं रोमन्नाणकं १४ शतकं यावत् व्यवहारे आसीत्। एवं तर्हि तस्य नाणकस्य नाम किम्?
५. प्रपञ्चस्तरे अतिविशालः ग्रन्थालयः कः?
६. सः राजा कः, यश्च युरोपखण्डे जन्म प्राप्य एशियाखण्डे मरणं प्राप्तवान्, यस्य च शवस्थानम् आफ्रिकाखण्डे अस्ति?
७. शेक्स्पीयर्वर्येण रचितेषु नाटकेषु अतिमहत् किम्?
८. कस्य देशस्य मानचित्रं तदीये राष्ट्रध्वजे एव चित्रितं भवति?
९. गौरीशङ्करशिखरं यदा आरूढं तदा एड्मण्ड् हिलेरी, तेनसिंग् नार्गे च चतुरः ध्वजान् तत्र स्थापितवन्तौ। ते ध्वजाः के?
१०. हेन्री आर्चर्वर्येण अन्विष्टं किञ्चन यन्त्रम् इदानीं मूल्याङ्कमुद्रणसमये उपयुज्यते। तस्य यन्त्रस्य नाम किम्?
११. गेलिलियोवर्यः वैज्ञानिकं कं सिद्धान्तम् अन्विष्टवान्?
१२. केम्ब्रिज्विश्वविद्यालयतः पदवीं प्राप्तुं चार्ल्स् डार्विन्वर्येण कः विषयः अधीतः आसीत्?
१३. सर्वप्रथमं भारते पर्यटनं कृतवान् अमेरिकाध्यक्षः कः?
१४. सूर्यस्य परिक्रमणार्थं भूमेः कियान् कालः आवश्यकः?
१५. गौरीशङ्करशिखरे अधिकतया कीदृशी शिला दृश्यते?

## उत्तराणि

१. आर्यभटेन।
२. अश्वशिरस्सदृशं शिरः उन्नीय तरन् कश्चन समुद्रमीनः।
३. ईडो इति।
४. सोलिडस् इति।
५. मास्कोनगरस्थः लेनिन्-ग्रन्थालयः।
६. अलेक्साण्डर्चक्रवर्ती। यूरोपखण्डस्य ग्रीस्देशस्य मेसिडोनियानगरे तेन जन्म प्राप्तम्। एशियाखण्डे बगदाद्समीपस्थे बेबिलोनियानगरे तेन मरणं प्राप्तम्। आफ्रिकाखण्डे ईजिप्ट्देशस्य अलेक्साण्ड्रियानगरे तदीयं भौतिकं शरीरं शवस्थाने स्थापितम्।
७. हम्लेट्। अस्मिन् २९,५०० पदानि सन्ति।
८. सैप्रस्देशः।
९. संयुक्तराष्ट्रसङ्घस्य, ब्रिटन्देशस्य, नेपालदेशस्य, भारतस्य च ध्वजाः ताभ्यां स्थापिताः।
१०. पर्फरेटिङ्ग्यन्त्रम्।
११. घट्याः लोलकम् (Pendulum)।
१२. धर्मशास्त्रम्।
१३. ड्वैट्. डि. ऐसनुहोवर्। १९५९ तमे वर्षे।
१४. ४६ कलाधिक- ४८ निमेषाधिक- ५ घण्टाधिक- ३६५ दिनानि।
१५. सुधामय्यः शिलाः।

# र स वा र्ता:



## प्राणिसङ्ग्रहालयस्य विज्ञप्तिः

लण्डन्नगरीयः प्राणिसङ्ग्रहालयः अतिप्राचीनः। १६० वर्षेभ्यः पूर्वम् एषः स्थापितः। किन्तु गतवर्षद्वयात् एषः क्लेशम् अनुभवन् अस्ति। एतस्य व्यवस्थायाः निर्वहणार्थं प्रतिवर्षम् ४० मिलियन् पौण्ड्स् आवश्यकानि इति निर्वाहकः वदति। किन्तु तावत् धनं दातुं ब्रिटिष्सर्वकारः न सिद्धः। अतः प्राणिसङ्ग्रहालयस्य निर्वाहकेण प्रपञ्चस्थाः सर्वे प्राणिसङ्ग्रहालयाभिमानिनः, तत्रापि विशिष्य पशुपक्षिप्रियाः बालाः, प्रार्थिताः यत् यथाशक्ति सञ्चयं कृत्वा धनं प्रेषयन्तु, अन्यथा प्राणिसङ्ग्रहालयस्थाः सर्वे प्राणिनः अन्यान्यस्थलानि प्रापणीयाः भवेयुः' इति।

## येसुक्रिस्तेन उपयुक्ता भाषा

बैबल्ग्रन्थस्थाः सूक्तयः प्रपञ्चे स्थिताभिः सर्वाभिः भाषाभिः अनूदिताः सन्ति। येसुवर्यः आरामिक्भाषया




स्वविचारान् उपस्थापितवान् आसीत्। इदानीम् एषा भाषा क्षयावस्थायाम् अस्ति। इदानीं तु सिरियादेशे डेमास्कस्समीपस्थस्य मौलानानगरस्य परिसरे ये वसन्ति ते केचन केवलम् एतया भाषया सम्भाषणं कुर्वन्तः सन्ति। एतस्याः लिपिः नास्ति। अतः एतया भाषया लेखनं, लिखितस्य पठनं वा असाध्यम्। सिरियादेशे सिरियक्, हिब्रू, अरबिक्भाषाः च आधिकारिकभाषाः सन्ति। आरामिक्भाषा तु मौखिकतया तत्र पाठ्यते स्म। अतः एव एषा इदानीम् अपि तत्र जीवति।

## 'गोल्फ्'क्रीडायां विजेतृभ्यः पारितोषिकरूपेण दीयन्ते प्राणिनः

सद्यः मलेशियादेशे प्रवृत्तासु 'गोल्फ्'स्पर्धासु ये विजयं प्राप्तवन्तः तेभ्यः पुरस्काररूपेण धनं वस्तु वा न



दत्तम्। प्रथमस्थानं प्राप्तवते एका धेनुः, द्वितीयस्थानं तृतीयस्थानं च प्राप्तवद्भ्यां मेषाः, चतुर्थ-पञ्चमस्थानं प्राप्तवद्भ्यां शशाः च दत्ताः। यः सर्वप्रावीण्यं प्राप्तवान् तस्मै एकः अश्वः चतुश्चक्रयुक्तं शकटं च दातव्यम् इति निर्णीतम् आसीत्। किन्तु एतत् पारितोषिकं केनापि न प्राप्तम्। 'गोल्फ्क्रीडासक्तेषु कृषिविषये पशुविषये च आदरं जनयितुम् एषा योजना चिन्तिता' इति तत्रत्येन कृषिसचिवेन उक्तम् अस्ति।



# मन्त्राभिमन्त्रितः कर्णः

जपानदेशे पूर्वं कश्चन युवकः आसीत्। सः कदाचित् वायुविहारार्थं गच्छन् समुद्रतीरे सिकतागर्ते पतितम् एकं मीनं दृष्टवान्। युवकः करुणया तं मीनं हस्तेन उन्नीय नीत्वा समुद्रजले त्यक्तवान्। 'कस्यचित् जीविनः प्राणाः मया रक्षिताः इति तृप्त्या सः ततः प्रतिप्रस्थितवान्। तावता कश्चन कण्ठस्वरः श्रुतः– "तिष्ठतु श्रीमन्!" इति।

युवकः परिवृत्य दृष्टवान्। तत्र काचित् सुन्दरी महिला दृष्टा तेन। एषा कथम् अत्र आगता? इति आश्चर्येण दृष्टवान् सः। 'एषा अन्यं कञ्चित् आहूतवती स्यात्, न तु माम्' इति आलोच्य अग्रे पदं स्थापितवान् युवकः।

"भवन्तम् एव आह्वयन्ती अस्मि" इति उक्तवती सा स्त्री।

अत्याश्चर्येण युवकः तस्याः समीपं गतवान्। तदा सा युवकम् उक्तवती– "समुद्रराजः मां प्रेषितवान्। तदीयाम् एकमात्रपुत्रीं भवान् रक्षितवान्। 'भवान् समुद्रराज्यं प्रति आनेतव्यः' इति राज्ञा आज्ञा कृता अस्ति। अतः कृपया मया सह भवान् आगच्छतु तावत्" इति।

"अहं तरणं न जानामि खलु? समुद्रराज्यं प्रति कथम् आगच्छेयम्?" इति पृष्टवान् युवकः।

"चिन्तां मा करोतु। अहम् अपि मीनकुलोत्पन्ना। मम पृष्ठे उपविशतु भवान्। भवन्तं सकुशलं नेष्यामि" इति उक्तवती सा मीनस्त्री।

ततः तौ प्रस्थितवन्तौ। यदा जलं प्राप्तं तदा सा स्त्री मीनरूपं प्राप्तवती। युवकः तस्याः उपरि उपविष्टवान्।

मार्गे सा युवकम् उक्तवती– "समुद्रराजः भवन्तं वदेत्– भवान् यत् इच्छति तत् ददामि, अपेक्षितं प्रार्थयतु इति। तदा भवता मन्त्राभिमन्त्रितः कर्णः एव आवश्यकः इति

वक्तव्यम्। सः अन्यत् किमपि प्रार्थयतु इति वदेत्। 'अन्यत् किमपि मास्तु' इति वक्तव्यं भवता। पुत्र्याः प्राणान् रक्षितवते भवते स च कर्णः अवश्यं दीयते तेन। स च कर्णः भवता स्वकर्णे योजितः चेत् सर्वेषां प्राणिनां भाषा अपि अवगम्यते'' इति।

समुद्रराजः युवकम् आदरेण स्वागतीकृत्य विशेषतः सत्कृतवान्। युवकस्य तोषणार्थं नृत्योत्सवाः आयोजिताः। अन्यविधाः बहवः विनोदोत्सवाः व्यवस्थापिताः। कानिचन दिनानि सन्तोषेण तत्र यापितवान् युवकः। ''आगतस्य मम बहूनि दिनानि गतानि। अतः अहं मम गृहं गन्तुम् इच्छामि'' इति समुद्रराजम् उक्तवान् सः।

''अस्तु तावत्। एतस्मिन् लोके प्रियतमं यत् अस्ति तत् वदतु। तदेव दास्यामि भवते'' इति युवकम् उक्तवान् समुद्रराजः।

''मन्त्राभिमन्त्रितः कर्णः आवश्यकः मह्यम्'' इति उक्तवान् युवकः।

''तादृशः कर्णः मम लोके एकः एव अस्ति। अतः अन्यत् किमपि प्रार्थयतु'' इति निवेदितवान् समुद्रराजः।

''मह्यं तु सः मन्त्राभिमन्त्रितः कर्णः एव आवश्यकः। न अन्यत् किमपि'' इति उक्तवान् युवकः।

पुत्र्याः प्राणान् रक्षितवन्तं युवकं खेदयितुम् अनिच्छन् समुद्रराजः तस्मै मन्त्राभिमन्त्रितं कर्णं दत्तवान्। मीनस्त्री तं तीरं प्रापितवती।

समुद्रतीरं प्राप्तवान् युवकः पशुपक्षिणां सम्भाषणस्य अर्थं ज्ञातुम् इच्छन्



मन्त्राभिमन्त्रितं कर्णं स्वकर्णे योजितवान्। समीपे एव अल्पाकारकौ पक्षिणौ सम्भाषणं कुर्वन्तौ आस्ताम्। तयोः सम्भाषणस्य अर्थः अवगतः युवकेन।

एकः पक्षी अवदत्– "अत्र पश्यतु, कश्चन पुरुषः उपविष्टः दृश्यते। मनुष्याः बुद्धिमन्तः इति प्रथा श्रूयते। वस्तुतस्तु बहुत्र ते मूर्खताम् एव आचरन्ति। समीपे स्थितां नदीं सहस्रशः जनाः क्रमन्ति। क्रमणमार्गे काचित् शिला अस्ति। सर्वे तां पादेन स्पृशन्तः गच्छन्ति। वस्तुतस्तु सा सुवर्णमयी शिला। किन्तु एतत् तथ्यं कोऽपि ज्ञातुं न शक्तवान्" इति। अनन्तरं तौ पक्षिणौ मानवानां मूर्खतां स्मरन्तौ उच्चैः हसितवन्तौ।

एतत् श्रुत्वा युवकः नदीसमीपं गतवान्। नदीमध्ये स्थितां शिलाम् उन्नीतवान्। तां परितः स्थितां मृत्तिकां शैवालं च क्षालनेन अपनीतवान्। तदा तेन प्रकाशमयी सुवर्णशिला प्राप्ता।

तां शिलां कोषे स्थापयित्वा– 'अद्य मया अपूर्वम् ऐश्वर्यं प्राप्तम्' इति स्वगतं वदन् गृहं प्रति प्रस्थितवान् युवकः। तावता काकयोः सम्भाषणध्वनिः तेन श्रुतः। तदा सः मन्त्राभिमन्त्रितं कर्णं स्वकर्णे योजितवान्। काकयोः सम्भाषणस्य अर्थः तदा तेन ज्ञातः।

"मानवाः चतुराः इति ख्यातिः। किन्तु तेषां मूर्खता वर्णनातीता। भूस्वामी अपि एतादृशः एव। अस्वस्थायाः पुत्र्याः चिकित्सार्थं सः विविधाभ्यः दिग्भ्यः वैद्यान् आनयति। किन्तु किं तेन? चिकित्सया तस्याः रोगः न



अपगमिष्यति। भूस्वामिनः अट्टे स्थितानि वस्तूनि बद्ध्वा स्थापयन्तः कर्मकराः अजानन्तः एकं सर्पम् अपि बद्धवन्तः। आहाराभावतः सः सर्पः नितरां कृशः जातः अस्ति। सर्पशापतः भूस्वामिपुत्र्याः व्याधिः। सर्पः उज्जीवितः चेत् तस्याः व्याधिः अपगमिष्यति। सर्पः मृतः चेत् भूस्वामिपुत्री अपि मरिष्यति'' इति।

'काकयोः सम्भाषणं यत् श्रुतं तत् वरम् एव अभवत्' इति आलोच्य युवकः भूस्वामिनः गृहं गतवान्। ''यः मम पुत्र्याः व्याधिं निवारयिष्यति तस्मै सः यत् इच्छति तत् दीयते'' इति लिखितं फलकं भूस्वामिनः गृहस्य पुरतः स्थापितम् आसीत्।

युवकः भूस्वामिनः गृहस्य अन्तः गत्वा— ''एतस्याः व्याधिम् अहं निवारयिष्यामि'' इति उक्तवान्।

एतत् श्रुत्वा तत्र सम्मिलिताः वैद्याः— ''निपुणेषु अस्मासु केनापि यत् न शक्तं तत् एषः साधयिष्यति! अहो मूर्खता!'' इति उपहसितवन्तः। भूस्वामी तु उक्तवान्— ''भवान् यथाशक्ति प्रयत्नं करोतु'' इति।

तदा युवकः उक्तवान्— ''एतस्मिन् गृहे जीविहिंसा प्रचलति। अट्टे वस्तुबन्धे कश्चन सर्पः बद्धः अस्ति। सर्पः मोचितः चेत् भूस्वामिपुत्री स्वस्था भविष्यति'' इति।

भूस्वामी सेवकद्वारा बन्धेषु शोधनं कारितवान्। तत्र सेवकैः मरणावस्थाम् आपन्नः सर्पः दृष्टः। ते जागरूकतया सर्पं क्षीरं पायितवन्तः। क्षीरं पीत्वा किञ्चित् सामर्थ्यं प्राप्य सर्पः ततः निर्गतः। यथा यथा सर्पः गतः तथा तथा भूस्वामिपुत्री स्वस्था जाता। सा स्वस्था सती मञ्चतः उत्थितवती।

युवकः कृतकृत्यभावनया ततः निर्गन्तुम् उद्युक्तः। प्रतिफलं किमपि न इष्टं तेन। तदा भूस्वामी प्रार्थितवान् यत् भवता मम पुत्री परिणेतव्या, तेन अहम् ऋणमुक्तः करणीयः इति। युवकः एतत् अङ्गीकृतवान्। ततः अल्पे एव काले शुभे मुहूर्ते भूस्वामिपुत्री-युवकयोः विवाहः सम्पन्नः।





# समर्थः गुरुः

भार्गवनामकस्य ग्रामाधिकारिणः बहोः कालतः सन्तानः न आसीत्। अन्ते दैवानुग्रहात् इव कश्चन पुत्रः जातः। कुलदीपकस्य एतस्य नाम दीपकः इति निश्चितवान् भार्गवः। यदा पुत्रः अष्टवर्षीयः जातः तदा भार्गवः निश्चितवान् यत् विद्याभ्यासार्थं समर्थस्य गुरोः समीपं मम पुत्रः प्रेषणीयः इति।

दीपकः तीक्ष्णमतिः। सर्वेषु विषयेषु आसक्तिः तस्य। यः कोऽपि विषयः सकृत् श्रुतः चेत् झटिति तथैव स्मरति सः। प्रौढान् अपि विषयान् अवगन्तुं प्रयतमानः सः कठिनान् प्रश्नान् पृच्छति। तदीयप्रश्नानाम् उत्तरं दातुं भार्गवः एव कदाचित् न शक्नोति। 'तीक्ष्णमतिम् एतं सामान्यस्य गुरोः समीपं प्रेषयामि चेत् प्रयोजनं न भवेत्' इति चिन्तयति भार्गवः।

तस्मिन् एव ग्रामे एकं गुरुकुलम् अस्ति। किन्तु तत् गुरुकुलं प्रति पुत्रं प्रेषयितुम् इच्छा नास्ति भार्गवस्य। 'अत्रत्यः गुरुः तावत्समर्थः न स्यात्' इति चिन्तयति भार्गवः। 'यदि एषः समर्थः स्यात् तर्हि अत्र न तिष्ठेत्। यतः ग्रामीणाः कियत् वा शुल्कादिकं दद्युः? यावत् प्राप्येत तावत् उदरपोषणार्थम् एव अपर्याप्तं स्यात्। नगरे यद्यपि उत्तमानि गुरुकुलानि सन्ति इति श्रूयते। किन्तु एकमात्रपुत्रं तावद्दूरं कथं वा प्रेषयिष्यामि? समीपे अन्यत्र कुत्रापि गुरुकुलम् अस्ति वा इति अन्वेषणं करणीयम्' इति निश्चितवान् भार्गवः।

अचिरात् एव भार्गवेण श्रुतं यत् ततः द्वियोजनदूरे कलापीठनामके नगरे भद्राचार्यनामकस्य वृद्धस्य गुरुकुलम् अस्ति, तस्य शिष्याः सर्वे समर्थाः इति ख्यातिः अस्ति इति।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



'भद्राचार्यः समर्थः गुरुः' इति यद्यपि कैश्चित् उक्तं तथापि भार्गवस्य मनसि तदीयसामर्थ्यविषये सन्देहः एव। 'शिष्याणां निर्माणे भद्राचार्यस्य विशेषसामर्थ्यं यदि स्यात् तर्हि सः नगरे गुरुकुलं चालयन् सुखेन तिष्ठेत्। सामान्ये ग्रामे गुरुकुलस्य चालनेन कः लाभः? न ख्यातिः, न धनम्। प्रतिभाशालिनां शिष्याणां प्राप्तिः अपि क्लेशाय। अतः जनानां वचनानि श्रुत्वा भद्राचार्यस्य सामर्थ्ये विश्वासः न करणीयः। परीक्ष्य एव तदीयं सामर्थ्यं ज्ञातव्यम्' इति चिन्तितवान् भार्गवः।

अनन्तरं योग्यानि उपायनानि स्वीकृत्य पुत्रेण सह कलापीठग्रामं प्रति प्रस्थितवान्। आदिनं प्रयाणं कृत्वा सायङ्कालसमये गुरुकुलं प्राप्तवान् च।

यदा भार्गवः गुरुकुलं प्राप्तवान् तदा गुरुः भद्राचार्यः स्नानार्थं सरोवरं गतवान् आसीत्। गृहे तस्य पत्नीपुत्रादयः आसन्। ते भार्गवम् आदरेण स्वागतीकृत्य पानीयादिकं दत्तवन्तः।

'यत्र भद्राचार्यः स्नानं करोति तत्रैव गत्वा सः द्रष्टव्यः। वृद्धः एषः उष्णजलेन न स्नाति, अपि तु सरोवरे शीतलजलेन स्नाति। एतत् किमर्थम् इति विशिष्टक्रमेण प्रश्नः प्रष्टव्यः। तदीयमेधाशक्तेः परीक्षा करणीया' इति निश्चित्य भार्गवः पुत्रेण सह सरोवरं प्रति प्रस्थितवान्।

भद्राचार्यस्य षड्वर्षीयः पौत्रः मार्गप्रदर्शनार्थं ताभ्यां सह आगतवान्। सरोवरे भद्राचार्यः वस्त्रं क्षालयन् आसीत्। भार्गवः तं विनयेन नमस्कृतवान्।

कुशलप्रश्नानाम् अनन्तरं भार्गवः भद्राचार्यं पृष्टवान्– "गुरुवर्य! वर्णद्वयं लोके प्रसिद्धम्। भवान् तत्र द्वितीयं वर्णम् एव मुख्यं भावयति वा?" इति।

"उभौ अपि वर्णौ मुख्यौ एव। तौ परस्परपूरकौ। तयोः कस्यापि गुणेन हीनता नास्ति" इति उक्तवान् भद्राचार्यः।

पार्श्वस्थं भद्राचार्यपौत्रं पृष्टवान् भार्गवः– "वत्स! आवयोः सम्भाषणस्य तात्पर्यं ज्ञातं वा भवता?" इति।



तदा सः बालकः उक्तवान्– "अथ किम्? दिन-रात्र्योः कतरा मुख्या इति भवता पृष्टम्। उभौ अपि मुख्यौ इति मम पितामहेन उक्तम्" इति।

भार्गवः भद्राचार्यं पुनः पृष्टवान्– "पूर्णेषु द्वादशसु सत्सु, तेषां षष्ठे भागे एवं किमर्थं कष्टम् अनुभूयते भवता?" इति।

तदा भद्राचार्यः उक्तवान्– "मम जन्मानन्तरं जन्म प्राप्य मृताः पुनः जाताः द्वात्रित्सङ्ख्याकाः इतोऽपि स्वस्थाः सन्ति। अतः मया एवं क्रियते" इति।

"एतस्य वचनस्य कः आशयः इति वक्तुं शक्नुयात् वा भवान्?" इति गुरुपौत्रं पृष्टवान् भार्गवः।

तदा गुरुपौत्रः उक्तवान्– "कुतो न? भवान् मम पितामहं पृष्टवान् – वार्धक्ये शिशिरऋतौ एवं शीतलजलेन किमर्थं स्नानं क्रियते? इति। तदा मम पितामहः उक्तवान्– मम सर्वे दन्ताः दृढाः सन्ति। मम जीर्णशक्तिः न क्षीणा। शैत्यं सोढुं मम सामर्थ्यम् अस्ति। अतः अहं शीतलजलेन एव स्नानं करोमि इति" इति।

भार्गवः भद्राचार्यं पुनः पृष्टवान्– "भवतः गृहे गृहस्य निर्मातारः कति सन्ति?" इति।

"ते च चत्वारः। इदानीं तत्पक्षीयाः कार्यम् अनुवर्तयन्तः सन्ति" इति उक्तवान् भद्राचार्यः।

एतस्य सम्भाषणस्य आशयम् एवं निरूपितवान् गुरुपौत्रः– "भवतः कति पुत्राः इति भवता पृष्टम्। मम पितामहेन उक्तं यत् चत्वारः पुत्राः, बहवः पौत्राः च इति" इति।

भार्गवः पुनः पृष्टवान्– "श्रीमन्! भवान् तदा तदा कान्तिकन्याम् आनयति इति भाति। एवं ननु?" इति।

तदा भद्राचार्यः उक्तवान्– "कान्तिकन्या आनीता चेत् वस्त्रादिभिः भूषिता सा सगौरवं प्रतिप्रेषणीया खलु? अतः स्वकन्यायाम् एव मम विश्वासः, न तु परकन्यायाम्। स्वकन्या मां तोषयति" इति।

गुरुपौत्रः एतस्य प्रश्नोत्तरस्य तात्पर्यम् एवम् उक्तवान्– "ऋणरूपेण धनम् आनीयते वा इत्यस्य प्रश्नस्य उत्तरम् एवम्

आसीत् – ऋणम् आनीतं चेत् वृद्धिसहितं प्रत्यर्पणीयं भवति इत्यतः स्वसामर्थ्येन यावत् सम्पाद्यते तेनैव तृप्तिः प्राप्यते" इति।

भार्गवः पुनरपि प्रश्नं कृतवान्– "गुरुवर्य! जीवने कल्पवृक्षः आश्रयणीयः। तृणस्य आश्रयणेन कः लाभः?" इति।

"कल्पवृक्षस्य अभावे तृणस्य अभिवृद्धिः दुःसाध्यः। किन्तु तृणानां संहतिः (सम्मार्जनी) एव स्वच्छतायाः कारणम्। यत्र परिशुभ्रता तत्र लक्ष्मीः निवसति" इति उक्तवान् भद्राचार्यः।

एतस्य प्रश्नोत्तरस्य आन्तर्यम् एवं निरूपितवान् गुरुपौत्रः– "राजाश्रयं प्राप्तुं किमर्थं प्रयत्नः न कृतः? किमर्थम् अल्पायकरे ग्रामे वासः क्रियते इति प्रश्नः आसीत्। 'राजाश्रयः नास्ति चेत् ग्रामाः न जीवन्ति। यदि अहम् एव ग्रामस्य उपेक्षां कुर्यां तर्हि को वा ग्रामाणाम् उद्धारं कुर्यात्? सर्वे ग्रामीणाः विद्यावन्तः सन्तः ग्रामविकासार्थं यदि प्रयत्नं कुर्युः तर्हि एतेषां विषये राजा अपि आदरवान् स्यात्। एतेन एव देशोद्धारः' इति मम पितामहेन उक्तम्" इति।

तावता भद्राचार्यस्य पौत्री धावन्ती तत्र आगतवती। विविधैः प्रश्नैः पितामहं पीडयितुम् उद्युक्ता च।

तस्याः व्यवहारेण आकृष्टः भार्गवः प्रीत्या तां समीपम् आहूय पृष्टवान्– "वत्से! अहम् एकं प्रश्नं पृच्छामि वा? उत्तरं वदति वा भवती?" इति।

"अस्तु" इति उक्तवती बालिका।

"मौनं स्थातव्यं चेत् किं करणीयम्?" इति पृष्टवान् भार्गवः।

"निरन्तरं कोलाहलः करणीयः" इति उक्त्वा हसन्ती वेगेन ततः गृहं प्रति धावितवती सा बालिका।

तत्रत्याः सर्वे हसितवन्तः। भद्राचार्यस्य सामर्थ्यम् अपूर्वम् इति एतावता भार्गवेण ज्ञातम् आसीत्। अतः स्वपुत्रं तस्मिन् गुरुकुले योजितवान् सः। कालान्तरे दीपकः सुप्रसिद्धः विद्वान् जातः।






रावणस्य सूचनायाः अनुगुणं मन्त्रिणा प्रहस्तेन ये प्रश्नाः पृष्टाः तेषाम् उत्तरम् एवम् उक्तवान् हनूमान्–

"राक्षसराजस्य रावणस्य भवतः दर्शनं प्राप्तव्यम् इति उद्देशेन एव मया अशोकवनस्य नाशः कृतः। किन्तु मम इच्छापूर्तौ विघ्नम् आचरन्तः रक्षकभटाः औद्धत्यं प्रदर्शयन्तः युद्धार्थम् आगतवन्तः। अहं तु निरायुधः। आत्मरक्षणार्थं मया अपि युद्धं कृतम्। मां सामान्यं भावयन्तः ते युद्धार्थम् आगत्य प्राणान् त्यक्तवन्तः। वस्तुतः तु ब्रह्मणा वरः दत्तः अस्ति यत् केनापि अस्त्रेण शस्त्रेण वा भवतः अपायः न भविष्यति इति। अतः एव ब्रह्मास्त्रम् अपि मां बन्द्धुं न अर्हति। भवता अपि देवानाम् अनुग्रहतः विशिष्टाः शक्तयः अस्त्राणि च प्राप्तानि सन्ति इति मया श्रुतम् आसीत्। एतादृशः भवान् मया सकृत् द्रष्टव्यः इति सङ्कल्प्य अहं ब्रह्मास्त्रेण बद्धः इव अभिनीतवान्। तदा राक्षसाः माम् अत्र आनीतवन्तः।

राक्षसेश्वर! अहम् अस्मि पराक्रमशालिनः श्रीरामस्य दूतः आञ्जनेयः। यदि अहं पूर्वम् एव स्वपरिचयं वदेयं तर्हि भवान् विविधान् व्याजान् वदन् दर्शनावकाशं निवारितवान् अभविष्यत्। अतः भवद्दर्शनार्थं मया एतादृशः मार्गः आश्रितः।

श्रीरामदूतः अहं राज्ञा सुग्रीवेण अत्र प्रेषितः। भवतः हितार्थम् एव मित्रेण सुग्रीवेण कानिचन हितवचनानि मद्द्वारा प्रेषितानि।



तानि वदामि। श्रद्धया शृणोतु–

भवान् सुग्रीवं तदग्रजं वालिनं च जानाति एव। वालिनम् एकेन एव बाणेन संहृत्य रामः सुग्रीवं सिंहासने उपवेशितवान्। 'सीतान्वेषणे साहाय्यं करिष्यामि' इति वचनं दत्तवान् आसीत् सुग्रीवः। तदनुगुणं तेन सर्वासु दिक्षु वानराः प्रेषिताः। एवं निर्गतेषु अहम् अन्यतमः। वायुदेवस्य अनुग्रहात् जातस्य मम नाम हनूमान् इति। शतयोजनविस्तीर्णं समुद्रम् उल्लङ्घ्य अहम् अत्र आगतः। सीतादेवी अन्विष्टा अपि। सा भवता गोपिता अस्ति इति मया श्रुतम् आसीत्। तत् सत्यं जातम्। धर्मज्ञः भवान् रामं वञ्चयित्वा सीतां बलात्कारेण यत् आनीतवान् तत् धर्मसम्मतं तु सर्वथा न। एतत् भवान् ज्ञातुं न शक्नोति इति न। अतः विवेकबोधकानि वचनानि वदन् अस्मि। रामलक्ष्मणयोः कोपस्य पात्रीभूतः कश्चित् कदापि सुखेन स्थातुं न अर्हति। एषः एव सुग्रीवस्य सन्देशः। सीता कुत्र अस्ति इति इदानीं ज्ञातम्। इतः परं रामः यथायोग्यं करिष्यति। भवतः व्यवहारम् अवलम्ब्य रामः अग्रिमं पदं कीदृशं स्यात् इति निर्णेष्यति। यदि अहम् इच्छेयं तर्हि अशोकवनं किं, लङ्कानगरीम् एव नाशयितुं समर्थः। किन्तु तथा करणं रामस्य प्रियं न भवेत् इति आलोच्य मया तथा न कृतम्। वानरभल्लूकादिसेनायाः पुरतः रामेण प्रतिज्ञा कृता अस्ति यत् सीतायाः अपहर्तारम् अहम् एव संहरिष्यामि इति। येन दोषः आचरितः तस्मै कुप्यति रामः, न तु तद्राज्याय। सीतादेवी भवतः मृत्युः इति भावयतु। अतः स्वक्षेमं प्रथमं चिन्तयतु। कस्यापि अहितम् अहं न इच्छामि। अतः निष्पक्षपाती सन् अहं हितम् उपदिष्टवान् अस्मि'' इति।

निर्भीकस्य हनूमतः स्पष्टवचनानि श्रुत्वा क्रुद्धः रावणः– ''अये, मदोन्मत्त वानर! अलं व्यर्थप्रलापेन! भटाः, एतं दुष्टं बध्नन्तु, मारयन्तु च'' इति उक्तवान्।

तदा रावणानुजः विभीषणः झटिति उत्थाय– ''अग्रज! एषः हनूमान् सुग्रीवस्य दूतरूपेण अत्र आगतः। दूतस्य मारणं राजधर्मविरुद्धम्। यदि एतेन उक्तं भवतः अप्रियं स्यात् तर्हि दूताः येन दण्डेन दण्ड्यन्ते

तेन दण्डेन एतं दण्डयतु। मारणं तु सदाचारविरुद्धम्'' इति उक्तवान्।

एतावता अपि रावणस्य कोपः न शान्तः। सः कोपेन पुनरपि उक्तवान्– ''एषः दुष्टः वानरः रम्यम् अशोकवनं नाशितवान् अस्ति। बहून् राक्षसान् मारितवान् अस्ति। एतादृशः दुष्टः यदि मार्यते तर्हि न किमपि पापम्'' इति।

''अग्रज! यदाकदापि दूतः न मारणीयः इति अभिज्ञाः वदन्ति। दूतः दण्डनीयः एव चेत् तत्र अन्ये मार्गाः आश्रयणीयाः। अङ्गच्छेदनं, कशया ताडनं, मुण्डनं, तप्तमुद्रापीडनम् इत्यादयः दण्डाः नीतिसम्मताः। अन्यच्च एतस्य मारणेन भवतः कः लाभः? वस्तुतस्तु एतं यः प्रेषितवान् सः मारणीयः भवता। यथा एतेन कृतं तथा समुद्रलङ्घनं कर्तुं समर्थः अन्यः नास्ति इति मम अभिप्रायः। अतः एतं सजीवं प्रेषयतु। एषः प्रतिगत्य सीतावार्तां यदा निवेदयिष्यति तदा रामलक्ष्मणादयः अत्र आगमिष्यन्ति। तैः सह युद्धं भवतः शोभते। तदा एव भवतः कीर्तिः अपि। अतः एतं सजीवं त्यजतु'' इति उक्तवान् बिभीषणः।

बिभीषणस्य वचनं श्रुतवतः रावणस्य कोपः शान्तः। ''दूतः न मारणीयः इति राजधर्मः इति तु अहम् अपि अङ्गीकरोमि। अतः अन्येन क्रमेण एतं दण्डयाम। पुच्छं कपीनां प्रियम्। अतः भोः भटाः, एतस्य पुच्छम् अग्निना दहन्तु'' इति आज्ञापितवान् रावणः।

राक्षसाः वस्त्रम् आनीय तैलेन आर्द्रीकृत्य





अग्रे गच्छति। राक्षसाः तत्र तत्र– "गूढचरस्य का गतिः भवति इति पश्यन्तु भोः" इति वदन्तः अग्रे गच्छन्तः आसन्।

'पुच्छे अग्निं संयोज्य हनूमन्तं मार्गे नयन्तः सन्ति' इति वार्ता सीतया श्रुता। सा अश्रूणि स्रावयन्ती अग्निदेवं प्रार्थितवती यत् हनूमन्तं रक्षतु कृपया इति।

सीतायाः दुःखं दृष्ट्वा सुरमा उक्तवती– "अम्ब! महाकपेः विषये भवती चिन्तां मा करोतु। स तु राक्षसभटान् अधः पातयित्वा गृहात् गृहं प्रति उत्प्लवनं कुर्वन् लङ्कां दहन् अस्ति, पश्यतु" इति।

सुरमायाः वचनं सत्यम् एव। लङ्कायाः प्रमुखस्थानानि दृष्ट्वा हनूमान्– 'इतः परम् एते दण्डनीयाः' इति निश्चित्य स्वशरीरं लघूकृतवान्। तदा बन्धनानि अपगतानि अभवन्। अनन्तरं शरीरं पुनरपि संवर्ध्य द्वारतोरणसमीपस्थम् अयोमयं परिघम् उन्नीय राक्षसान् निर्दयं ताडयित्वा गृहाणाम् उपरि सञ्चारम् आरब्धवान्।

वस्त्रं पुच्छे योजितवन्तः। अग्निः अपि योजितः तैः।

राक्षसानां कृत्यं पश्यतः हनूमतः महान् कोपः आगतः। राक्षसैः मार्गम् आनीतः सः कोपेन परितः स्थितान् पुच्छेन ताडितवान्।

एतावता एव 'हनूमतः पुच्छं दह्यते' इति वार्ता सर्वत्र प्रसृता आसीत्। अतः बालाः, स्त्रियः, वृद्धाः च परमानन्देन मार्गस्य पार्श्वे स्थितवन्तः आसन्।

राक्षसाः भेरीप्रभृतीनि वाद्यानि वादयन्तः अट्टहासं कुर्वन्तः हनूमन्तम् अग्रे नयन्तः आसन्। केचन तु सन्तोषेण नृत्यन्ति स्म। हनूमान् राक्षसानाम् आयुधागाराणि, अन्यानि रहस्यस्थलानि च जागरूकतया परिशीलयन्

प्रथमं तेन प्रहस्तस्य गृहम् अग्निसात्कृतम्। अनन्तरं महापार्श्वस्य गृहं, ततः शुकः-वज्रदंष्ट्र-सारण-जम्बुमालि-सुमालिप्रभृतीनां गृहाणि अग्निसात्कृतानि। इन्द्रजितः गृहम् अपि अग्निसाज्जातम्। एवं राक्षसप्रमुखाणां गृहाणि दह्यमानानि जातानि। विभीषणस्य गृहे अग्निः न योजितः हनूमता। अग्निकारणतः राक्षसानां सम्पत्तिः

दग्धा अभवत्। समग्रे लङ्कानगरे हाहाकारः उद्गतः। सर्वत्र आर्तनादः श्रूयते।

एतावत्पर्यन्तम् अग्निवायुप्रभृतयः रावणात् भीताः सन्तः मौनं तिष्ठन्ति स्म। इदानीं तु सर्वत्र विजृम्भन्ते ते।

एषः अग्निप्रकोपः कथं निवारणीयः इति न जानन्ति राक्षसाः। अग्निदेवः एव कुपितः सन् कपिरूपेण आगतः स्यात् इति तेषां विचारः। 'यदि एषः स्वयम् अग्निदेवः न स्यात् तर्हि अग्निः एतं दहेत् एव खलु?' इति चिन्तयन्ति ते।

सुन्दरं लङ्कानगरम् इदानीं समग्रतया अग्निना आक्रान्तम् अस्ति। हाहाकारं विना नान्यः ध्वनिः श्रूयते तत्र। केचन भीत्या स्तब्धाः सन्ति। अन्ये केचन 'रक्षतु कृपया' इति अग्निदेवं प्रार्थयन्तः सन्ति।

सर्वत्र अग्निं योजयित्वा तृप्तः अभवत् हनूमान्। कार्यं समाप्य सः सकृत् परिक्रम्य दृष्टवान्। 'मया यत् करणीयम् इति चिन्तितं तत् सम्पन्नम्' इति आलोच्य सः समुद्रतीरं गत्वा जले पुच्छं मज्जितवान्। तेन पुच्छस्थः अग्निः शान्तः।

'अहो, मया एकम् अनुचितं कार्यम् अपि कृतं स्यात्' इति विचारः आगतः तस्य मनसि। 'सत्यम्! लङ्का दग्धव्या इति आलोच्य आवेशेन कार्यं कुर्वन् अहं सीतायाः योगक्षेमं न चिन्तितवान् एव। अविचिन्त्य सर्वं दहता मया सीता अपि दग्धा स्यात् खलु? अहो



अविवेकिता मम!' इति पश्चात्तापम् अनुभूतवान् सः। तावता मनसि अन्यः अपि विचारः आगतः– 'यः अग्निः मां न दग्धवान् सः सीतां कथं वा दहेत्? अतः सीता सकुशलं स्यात् एव' इति।

'यदि सीता दग्धा स्यात् तर्हि अहम् अपि अत्रैव प्राणान् त्यक्ष्यामि' इति निश्चित्य हनूमान् अशोकवनस्थस्य शिंशुपावृक्षस्य समीपं गतवान्। तत्र सीता सकुशलम् उपविष्टवती आसीत्। एतत् दृष्ट्वा तृप्त्या दीर्घं निश्श्वस्य हनूमान् सीतां नमस्कृत्य– "अम्ब! सौभाग्यवशात् भवती दग्धा न जाता। भवत्याः योगक्षेमम् अचिन्तयता मया समग्रायां लङ्कानगर्याम् अग्निः योजितः। भवत्याः विषयं चिन्तयतः मम हस्तौ पादौ च



कम्पेते स्म" इति उक्तवान्।

सीता हनूमन्तं दृष्ट्वा– "आञ्जनेय! अपूर्वं सामर्थ्यं भवतः। भवान् एकाकी एव असङ्ख्यान् राक्षसान् मारयित्वा समग्रे लङ्कानगरे अग्निं संयोज्य अत्र महतीं भीतिम् उत्पादितवान्। रावणस्य हृदये अपि भीतिः जनिता भवता। एतादृशः यस्य पक्षे भवति तस्य पक्षस्य जयः निश्चितः। आञ्जनेय! रामं सर्वं निवेद्य अत्र आनयतु। शत्रुसंहारं कृत्वा मां नयतु सः" इति उक्तवती।

"अम्ब! भवत्याः दुःखस्य नाशकालः सन्निहितः अस्ति। अतः चिन्तां बिना दिनानि यापयतु भवती" इति उक्त्वा सीतां पुनरपि नमस्कृत्य सीतायाः अनुज्ञां प्राप्य ततः निर्गतवान् हनूमान्। समुद्रतीरे स्थितः अरिष्टनामकः पर्वतः आरूढः तेन।

अनन्तरं देहं महोन्नतं वर्धयित्वा पादाभ्यां पर्वतशिखरं ताडयित्वा झटिति आकाशमार्गम् आश्रितवान् हनूमान्। हनूमतः पादाघाततः समग्रः पर्वतः कम्पितः अभवत्।

अपारं जलराशिं पश्यन् मेघानां मध्ये सञ्चरन् हनूमान् महेन्द्रपर्वताभिमुखं गच्छन् अस्ति। आकारदर्शनात् एव महेन्द्रपर्वतः दूरात् अभिज्ञातः तेन। महेन्द्रपर्वतं दृष्ट्वा हनूमान् उच्चैः सिंहनादं कृतवान्।

हनूमतः प्रत्यागमनम् एव प्रतीक्षमाणाः अङ्गदादयः महेन्द्रपर्वतस्य उपरि आसन्। सिंहनादं श्रुत्वा ते ज्ञातवन्तः यत् हनूमान् प्रत्यागतः इति। तेषु उत्साहतरङ्गाः उत्पन्नाः। "जयतु जयतु, वीरहनूमान्" इति ते उच्चैः जयघोषं कृतवन्तः।

"हनूमान् कार्यं संसाध्य एव प्रत्यागतः इति तु निश्चितम्। अन्यथा सः एवम् उच्चैः सिंहनादं न कुर्यात्" इति वानरान् उक्तवान् जाम्बवान्।

आनन्दतुन्दिलाः वानराः शिलाः वृक्षान् च आरुह्य हनूमन्तं द्रष्टुं प्रयत्नं कुर्वन्ति। केचन वृक्षशाखाः उत्पाट्य हस्तेन गृहीत्वा इतस्ततः कम्पयन्तः स्वस्य सन्तोषं सूचितवन्तः।

हनूमान् महेन्द्रपर्वतस्य उपरि पदं स्थापितवान्। विषयं ज्ञातुम् इच्छन्तः वानराः

तं परितः स्थितवन्तः। केचन कन्दमूलफलानि आनीय तस्य पुरतः स्थापितवन्तः। हनूमान् जाम्बवन्तं, युवराजम् अङ्गदम्, अन्यान् वानरवृद्धान् च नमस्कृतवान्। सर्वेषां कुतूहलस्य शमनार्थं चतुर्भिः एव पदैः आशयं प्रकाशितवान्– ''अहो, सीता दृष्टा मया'' इति।

अमृतपानतुल्यम् एतत् वचनं श्रुत्वा सर्वे वानराः नितरां सन्तुष्टाः। केचन सन्तोषेण सिंहनादं कृतवन्तः। केचन पुच्छैः भूमिं ताडयन्तः धूलिम् उत्पादितवन्तः। पुनः केचन 'अस्माभिः प्रतिगमने विलम्बः अनुष्ठितः चेदपि शुभवार्ता तु नीयते। अतः वयं निश्चयेन क्षमार्हाः भविष्यामः' इति परस्परं वदन्तः आनन्दजनितबाष्पेण युक्ताः अभवन्।

त्रिचतुराणि पदानि उक्त्वा मौनम् आश्रितवन्तं हनूमन्तम् उक्तवान् अङ्गदः– ''शतयोजनविस्तीर्णं समुद्रं लङ्घयित्वा कार्यं संसाध्य सकुशलं प्रत्यागतवतः भवतः पराक्रमः असाधारणः एव। एतादृशं कार्यम् अन्यः कर्तुं न अर्हति। भवता सीतादर्शनवार्ता आनीता यत् तेन वयं सर्वे उज्जीविताः। रामसुग्रीवयोः कोपात् वयं रक्षिताः'' इति।

लङ्कायां यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण श्रोतव्यम् इति सर्वेषां वानराणाम् इच्छा। अतः ते हनूमन्तं साग्रहम् उक्तवन्तः– 'सर्वं विस्तरेण निवेदयतु' इति। एतत् अङ्गीकृत्य हनूमान् शिलायाः उपरि उपविष्टवान्। तस्य पार्श्वे जाम्बवान् अङ्गदः च उपविष्टवन्तौ। तान् परितः अन्ये वानराः उपविष्टवन्तः।

वृद्धः जाम्बवान् हनूमन्तम् उक्तवान्– ''आञ्जनेय! सीतादेवी कथं दृष्टा भवता? सा कुशलिनी खलु? तां भवान् कथम् अभिज्ञातवान्? रावणः तां बहुधा पीडयन् अस्ति वा? भवान् तया सह वार्तालापं कृतवान् वा? सर्वं विस्तरेण वदतु। भवतः कथनं श्रुत्वा अग्रिमं पदं निश्चेतव्यम् अस्ति। रामस्य पुरतः किं वक्तव्यं, किं न वक्तव्यम् इति निश्चित्य इतः गन्तव्यम् अस्माभिः'' इति।





# उपकारस्य अपकारः

वरपुरनामके ग्रामे पूर्वं श्रीचरणः नाम कश्चित् आसीत्। सः सर्वथा निर्धनः। पित्रार्जिता अल्पा अपि भूमिः न आसीत् तस्य। अन्यस्य भूमौ कृषिं करोति सः। क्षेत्रस्वामिने प्रतिवर्षं उपचयस्य पादभागं धान्यम् अर्पयति च। एतावता अपि तदीयः आयः अल्पः एव। तथापि कथमपि जीवननिर्वहणं करोति सः।

श्रीचरणस्य पत्नी शारदाम्बा। तस्याः सुखजीनलालसता अधिका। ऋणं कृत्वा वा घृतं पातव्यम् इति चिन्तयति सा। अतः श्रीचरणस्य आयः अल्पः चेदपि व्ययः अत्यधिकः। ग्रामे बहुभ्यः तेन ऋणं स्वीकृतम् आसीत्।

कदाचित् शारदाम्बा पतिम् उक्तवती— "यावत् वयम् एतस्मिन् ग्रामे तिष्ठामः तावत् दारिद्र्यपिशाचात् अस्माकं मोक्षः न भवेत्। नगरे मम अग्रजः अस्ति। कुतश्चित् कथञ्चित् शतं रूप्यकाणि ऋणरूपेण प्राप्य भवान् मम अग्रजं पश्यतु। शतं रूप्यकाणि उत्कोचरूपेण दत्त्वा वा सः कुत्रापि उद्योगं दापयेत्। उद्योगः प्राप्तः चेत् प्रतिमासम् आयः निश्चितः। तेन च निश्चिन्तता" इति।

पत्न्याः वचनं श्रीचरणाय अरोचत। किन्तु धनं कथं प्राप्तव्यम् इत्येव समस्या। तथापि महत् दैन्यं प्रदर्श्य, त्रिचतुरान् बहुधा सम्प्रार्थ्य कथञ्चित् शतं रूप्यकाणि ऋणरूपेण प्राप्तवान् श्रीचरणः। तत् धनं स्वीकृत्य नगरं प्रति प्रस्थितवान् च।

'यदा उद्योगः प्राप्यते तदा वार्तां प्रेषयतु। सर्वाणि वस्तूनि स्वीकृत्य आगमिष्यामि अहम्' इति पतिम् उक्तवती शारदाम्बा।

यः कष्टैः पीडितः भवति तम् एव कष्टानि पुनः पुनः पीडयन्ति खलु? श्रीचरणस्य विषये अपि एवम् एव जातम्। नगरगमनमार्गे चोरा·



तं गृहीतवन्तः। तदीयं धनं वशीकृतवन्तः च। एतावदेव न, ते तं बलात् आकृष्य स्ववसतिं नीतवन्तः। चोरनायकः तं स्वस्य अङ्गमर्दनकार्ये नियोजितवान्। ततः पलायानार्थं मार्गं न जानाति श्रीचरणः। प्रतिदिनम् अश्रूणि स्रावयन् चोराणां सेवा करोति सः।

चत्वारः मासाः अतीताः। कदाचित् कश्चित् उत्तमवस्त्रधारी अश्वम् आरुह्य अरण्यमार्गेण गच्छन् आसीत्। चोराः हठात् तस्य उपरि आक्रमणं कृतवन्तः। सः अश्वारोही धनिकः धैर्येण खड्गम् आकृत्य प्रत्याक्रमणं कृतवान्। आयुधे सत्यपि कश्चित् दशाधिकान् आयुधधारिणः सम्मुखीकर्तुं न शक्नोति खलु? अन्ते श्रान्तः व्रणितः च सः अश्वारोही अश्वात् पतितवान्। चोराः तं बद्ध्वा स्वनायकसमीपं नीतवन्तः।

तस्य बन्धिनः मुखस्य दर्शनात् कुपितः चोरनायकः स्वानुचराणां कृत्यं कठोरं निन्दन् शीतलोपचारम् आरब्धवान्। यदा सः बन्धी सचेतनः जातः तदा चोरनायकः तस्य पादौ गृहीत्वा अश्रूणि स्रावयन् क्षमां प्रार्थितवान्।

तस्य धनिकस्य अश्वारोहिणः नाम धनगुप्तः इति। 'सद्गुणानां खनी, धर्ममूर्तिः' इति तस्य कीर्तिः आसीत्। पूर्वं कदाचित् चोरनायकः राजभटेभ्यः आत्मानं रक्षन् धावन् धनगुप्तस्य गृहं प्रविश्य शरणं प्रार्थितवान् आसीत्। धनगुप्तः अभयदानेन अनुगृह्य तदीयशरीरे जातानां व्रणानां चिकित्सार्थं व्यवस्थां कृतवान् आसीत्। एवम् उपकारं प्राप्य ततः प्रस्थानसमये चोरनायकः धनगुप्तम् उक्तवान् आसीत् यत् इतः परम् अहं कदापि चौर्यं लुण्ठनं वा न करिष्यामि इति।

"प्राणदातारं भवन्तम् एव अज्ञानेन ममानुचराः व्रणितं कृतवन्तः। उपकारिणः अपकारः कृतः मया। क्षमाप्रार्थनार्थम् अपि अनर्हः जातः अहम्" इति विषादेन उक्तवान् चोरनायकः।

तदा धनगुप्तः अपि विषादेन एव उक्तवान्– "मित्र! भवान् क्षमां केवलम्

इच्छति चेत् सा प्राप्ता एव अस्ति। यतः भवतः प्रार्थनातः पूर्वम् एव मया क्षमा दत्ता। किन्तु क्षमादानस्य अनन्तरम् अपि कश्चन खेदः मां बाधते। ये चोरवृत्त्या जीवन्ति ते ज्ञात्वा अज्ञात्वा वा उपकारिणः अपि अपकारं कर्तुम् अर्हन्ति। एतत् तु भवता स्वानुभवात् एव ज्ञातम् अस्ति। अतः मम प्रार्थना यत् इतः परं वा सन्मार्गेण जीवतु इति। यावत् भवान् चौर्यं कुर्वन् भवति तावत् 'महादुष्टाय प्राणदानं कुर्वन् अहं लोकस्य अपकारं कृतवान्' इति भावः मां बाधते एव'' इति।

''श्रीमन्! मया इदानीं विवेकः प्राप्तः। इतः परं कदापि चौर्यं लुण्ठनं वा न करिष्यामि। एतावत्पर्यन्तं यत् पापम् आचरितं तस्य क्षालनार्थम् इतः परम् एतस्मिन् अरण्यमार्गे चोरपीडा यथा कस्यापि न स्यात् तथा रक्षणं करिष्यामि। अरण्ये एव कुत्रापि कृषिं कुर्वन् जीवनं यापयिष्यामि'' इति उक्तवान् चोरनायकः।

चोरनायके यत् परिवर्तनं जातं तत् दृष्ट्वा धनगुप्तः नितरां सन्तुष्टः। चोरनायकस्य पार्श्वे एव श्रीचरणः स्थितः आसीत्। इतः विमोचनं प्राप्तुम् एषः एव सुसमयः इति आलोच्य सः धैर्येण द्वित्राणि पदानि अग्रे गत्वा धनगुप्तस्य पादौ गृहीत्वा स्वकीयं कष्टं निवेदितवान्।

तत् श्रुत्वा धनगुप्तः चोरनायकम् उक्तवान्– ''सन्मार्गेण जीवामि इति प्रतिज्ञा



कृता खलु भवता? तर्हि इदानीम् एव एकं सत्कार्यं करोतु। एषः चतुरः मासान् भवतः सेवां कृतवान्। तस्य प्रतिफलरूपेण चतुस्सहस्रं रूप्यकाणि दत्त्वा एतं प्रेषयतु'' इति उक्तवान्। 'तथैव करोमि' इति उक्त्वा श्रीचरणाय चतुस्सहस्रं रूप्यकाणि दत्तवान् चोरनायकः।

ततः सन्तोषेण स्वग्रामं प्रति प्रस्थितं श्रीचरणम् उक्तवान् धनगुप्तः– ''वस्तुतः अहम् अपि वरपुरं प्रत्येव गच्छन् आसम्। वरपुरे वासः आरोग्यवर्धकः इति वैद्येन सूचितम्। तत्र भरतेशः स्वक्षेत्रं विक्रेतुम् इच्छति इति श्रुतम्। शीघ्रं गत्वा तत् क्रेतव्यम् इति मम इच्छा। किन्तु नगरे अपि मया



त्वरया करणीयं किञ्चित् अस्ति। अतः भवान् धनं नीत्वा मत्प्रतिनिधीभूय तत् क्षेत्रं मदर्थं क्रीणातु। अहं सद्यः एव अग्रे यत् करणीयं तत् करिष्यामि" इति।

धनगुप्ततः धनं स्वीकृत्य स्वग्रामं प्रति प्रस्थितः श्रीचरणः। तस्य गमनस्य अनन्तरं धनगुप्तम् उक्तवान् चोरनायकः– "श्रीमन्! अपरिचिते विश्वस्य भवता पञ्चदशसहस्रं रूप्यकाणि दत्तानि। सः वञ्चयिष्यति चेत् का गतिः?" इति।

तदा धनगुप्तः– "अहं मनुष्याणां सद्गुणेषु विश्वसिमि। श्रीचरणः यदि वञ्चयेत् तर्हि पञ्चदशसहस्ररूप्यकाणां हानिः स्यात् मम। महाधनिकस्य मम एषा हानिः न गण्या। एतादृशीं हानिं लीलया सोढुं शक्नोति अहम्। किन्तु उपकृतवतः अपकारं कृत्वा यत् धनं प्राप्यते तत् जीर्णीकर्तुं सामर्थ्यं न भविष्यति श्रीचरणस्य। सः मां न वञ्चयेत् इति भावयित्वा मया तस्य हस्ते धनं निक्षिप्तम्। वञ्चना कृता चेत् हानिः तु तस्य एव, न तु मम" इति उक्त्वा ततः निर्गतवान्।

धनगुप्तेन दत्तं धनं स्वीकृत्य स्वग्रामं गतवान् श्रीचरणः। प्रवृत्तं समग्रं ज्ञात्वा सन्तोषेण उक्तवती शारदाम्बा– "सर्वं हिताय एव अभवत्। धनिकाः मन्दमतयः भवन्ति इति जनाः वदन्ति। धनगुप्तः अपि मन्दमतिः एव। भरतेशस्य क्षेत्रम् अस्माकं नाम्नि वयम् एव क्रेष्यामः" इति।

"किन्तु अग्रे धनगुप्तः आगत्य भूमिः मम नाम्नि क्रीता वा इति पृच्छति चेत् किम् उत्तरं वक्तव्यम्? तदा क्लेशः स्यात् खलु?" इति सन्देहं प्रकटितवान् श्रीचरणः।

"तत्समये यत् स्फुरति तद् वदाम। अथवा भवता धनं न दत्तम् एव इति वक्तुम् अपि शक्यते" इति उक्तवती शारदाम्बा।

ऋणप्रत्यर्पणार्थं द्विसहस्रं रूप्यकाणि व्ययितानि। अवशिष्टेन धनेन भरतेशस्य भूमिं क्रीतवान् श्रीचरणः। 'मम श्यालः भूमिक्रयणार्थं धनसाहाय्यं कृतवान्' इति सर्वान् असत्यम् उक्तवान् सः।

ततः मासस्य अनन्तरं धनगुप्तः सेवकद्वारा वरपुरं प्रति एकं पत्रं प्रेषितवान्। पत्रे लिखितम् आसीत्– 'नगरात् मम

आगमनसमये इतोऽपि एकमासात्मकः विलम्बः स्यात्। अतः मदर्थं या भूमिः क्रीता तद्विषये विस्तरेण एतत्सेवकद्वारा वार्तां प्रेषयतु' इति।

एतस्य उत्तररूपेण श्रीचरणः एवम् उत्तरं प्रेषितवान्– "श्रीमन्! इतः पूर्वं भवता प्रेषितः अन्यः कश्चन सेवकः आगतः आसीत्। तेन आनीते पत्रे लिखितम् आसीत् यत् भूमिक्रयणं न आवश्यकं, धनं प्रतिप्रेषणीयम् इति। तदनुगुणं मया धनं प्रतिप्रेषितम्। इदानीम् आगतं सेवकं दृष्ट्वा मया ज्ञातं यत् पूर्वम् आगतः वञ्चकः इति। ऋणं कृत्वा कथमपि धनं सङ्गृह्य मया एव भरतेशस्य भूमिः क्रीता। भवदीयं धनं प्रतिवर्षं किञ्चित् किञ्चित् यच्छन् क्रमशः प्रत्यर्पयिष्यामि" इति।

पुनः सप्ताहाभ्यन्तरे धनगुप्तः श्रीचरणाय एकं पत्रं प्रेषितवान्– 'भवान् मां वञ्चितवान्। यत्र वञ्चकाः भवन्ति तादृशे ग्रामे वासं कर्तुं न इच्छामि अहम्। अतः भवद्ग्रामस्य कामपि भूमिं क्रेतुं न इच्छामि' इति।

एतत् पत्रं पठित्वा महान्तं खेदम् अनुभूतवान् श्रीचरणः। तदा तस्य पत्नी शारदाम्बा उक्तवती– "किमर्थं व्यर्थं चिन्ता क्रियते भवता? वस्तुतः तु भवता वञ्चना न कृता। अल्पम् असत्यम् उक्तं स्यात् नाम। तथापि भवदीयम् ऋणं प्रत्यर्पयिष्यामि इति



पत्रं प्रेषितम् एव खलु? यथाशक्ति प्रतिवर्षं भागशः ऋणं प्रत्यर्प्यते एव भवता। अतः चिन्ता किमर्थम्? भवतः प्रामाणिकतां ज्ञातुम् अशक्नुवन् धनगुप्तः एव मूर्खः। तस्य पत्रं दृष्ट्वा खेदः न प्राप्तव्यः" इति।

पत्न्याः वचनं श्रुतवतः श्रीचरणस्य खेदः किञ्चिदिव अपगतः। अनन्तरं वर्षद्वयम् अतीतम्। किन्तु नूतनात् क्षेत्रात् अल्पः अपि लाभः न प्राप्तः श्रीचरणेन। वृष्ट्यभावतः, झञ्झावातकारणतः च सस्यानि नष्टानि। अतः पुनरपि श्रीचरणः यथापूर्वम् ऋणवान् एव जातः।

अत्रान्तरे श्रीचरणेन श्रुतं यत् समीपस्थम् अरण्यं कश्चन योगीश्वरः आगतः अस्ति, सः' सर्वविधसमस्यानां परिहारोपायं सूचयति



इति। 'एषः योगीश्वरः एव इदानीं शरणं मम' इति आलोच्य गृहे विद्यमानानि शतं रूप्यकाणि स्वीकृत्य योगीश्वरसमीपं प्रस्थितवान् श्रीचरणः।

मार्गे कश्चन चोरः आगत्य दण्डं प्रदर्शयन् 'सर्वं धनं मह्यम् अर्पयतु रे' इति गर्जितवान्। 'हा हन्त!' इति यावत् श्रीचरणः खेदम् अनुभवन् आसीत् तावता द्वौ वीरौ आगत्य तं चोरं दृढं गृहीत्वा– "चौर्यवृत्तिः परित्यक्तव्या इति बहुवारम् उक्तं चेदपि भवान् चौर्यं कुर्वन् एव अस्ति। इदानीम् आगच्छतु अस्मन्नायकसमीपम्। सः एव भवन्तं यथायोग्यं दण्डयिष्यति" इति उक्त्वा चोरम् आकृष्य नीतवन्तौ।

'पूर्वम् अहं यस्य चोरनायकस्य अङ्गमर्दनं कुर्वन् आसं तस्यैव अनुयायिनौ एतौ। धनगुप्तस्य पुरतः या प्रतिज्ञा कृता तदनुगुणं चोरनायकः अरण्ये चोरभयं यथा न स्यात् तथा कुर्वन् चौर्यं कुर्वतः जनान् दण्डयन् च अस्ति' इति ज्ञातवान् श्रीचरणः। चोरनायकस्य व्यवहारविषये सः सन्तुष्टः अभवत्।

ततः सकुशलं योगीश्वरस्य आश्रमं गतवान् श्रीचरणः। योगीश्वरः श्रीचरणं तीक्ष्णदृष्ट्या दृष्ट्वा– "उपकारिणः अपकारं कुर्वता भवता महत् पापम् आचरितम्। यावत् भवान् उपकारिणं क्षमां न प्रार्थयति तावत् भवतः उन्नतिः न भविष्यति" इति उक्तवान्।

अनन्योपायः श्रीचरणः ततः नगरं गत्वा धनगुप्तस्य पादौ गृहीत्वा क्षमां प्रार्थितवान्।

तदा धनगुप्तः मन्दहासपूर्वकम् उक्तवान्– "भोः, दारिद्र्यं मानवद्वारा अकार्याणि कारयति इति अहं जानामि। भवते अहं पत्रं प्रेषितवान् खलु? तदा एव मयि स्थितः कोपः शान्तः। भवतः क्षमाप्रार्थनातः पूर्वम् एव अहं भवन्तं क्षान्तवान् अस्मि। निश्चिन्तः भवतु भवान्" इति।

धनगुप्तं कृतज्ञतावचनानि उक्त्वा ततः स्वग्रामं प्रति प्रस्थितवान् श्रीचरणः। मार्गे तस्य मनसि कश्चन विचारः आगतः– 'धनगुप्तः वस्तुतः अपि यदि मां पूर्वम् एव क्षान्तवान् स्यात् तर्हि मम कष्टपरिस्थितिः एतावता अपगता स्यात् एव। किन्तु तथा

नास्ति। किमर्थम् एवम्?' इति।

सन्देहपरिहारार्थं सः पुनरपि योगीश्वरस्य समीपं गत्वा नमस्कृत्य पृष्टवान्– "श्रीमन्! भवतः वचनस्य अनुगुणम् अहं धनगुप्तं क्षमां प्रार्थितवान्। धनगुप्तः उक्तवान् यत् अहं भवन्तं पर्वम् एव क्षान्तवान् इति। किन्तु मम कष्टानि तु इतोऽपि न अपगतानि। एवं किमर्थम्?" इति।

तदा योगीश्वरः उक्तवान्– "सज्जनः क्षमां प्रदर्शयति चेत् दुष्टस्य पापानि क्षालितानि भवन्ति इति न। वस्तुतस्तु देवः यदा क्षाम्यति तदा एव पापात् विमुक्तिः। यावत् पापं कृतवान् जनः हृदयतः पश्चात्तापं न अनुभवति तावत् देवः न क्षाम्यति। भवता धनगुप्तस्य धनम् अपहृतम्। अनन्तरम् असत्यम् अपि उक्तम्। अहं यदा उक्तवान् तदा भवान् गत्वा क्षमां प्रार्थितवान्। तच्च स्वार्थसाधनार्थम्। क्षमाप्रार्थनसमये भवता अल्पः अपि पश्चात्तापः अनुभूतः यदि स्यात् तर्हि भवान् भूमिं धनगुप्ताय अर्पयिष्यत्। चोरनायके या प्रामाणिकता दृष्टा सा अपि नास्ति भवति। एतादृशं भवन्तं भगवान् न क्षाम्यति" इति।

स्वस्य अविवेकः ज्ञातः श्रीचरणेन। सः महान्तं पश्चात्तापम् अनुभवन् धनगुप्तसमीपं गत्वा अश्रूणि स्रावयन् पुनरपि क्षमां प्रार्थितवान्। तदा धनगुप्तः श्रीचरणं सान्त्वयन् उक्तवान्– "मूर्ख! भवता यत् कृतं तेन मम अल्पा अपि हानिः न जाता। भवान् स्वभावतः सज्जनः एव। दारिद्र्यपिशाचग्रस्तः भवान् एवं वञ्चनार्थं प्रवृत्तः जातः। अलं विषादेन। सा भूमिः मया भवते एव दीयते। सन्मार्गेण सुखेन जीवतु। यथाशक्ति परोपकारं करोतु च" इति।

गृहं प्रत्यागतः श्रीचरणः पत्नीं विवेकं बोधयित्वा तर्जनादिना तां निगृह्य व्ययं न्यूनीकृतवान्। श्रद्धया कृषिं कृत्वा धनं सम्पादितवान्। धनगुप्तेन निवार्यमाणः अपि तदीयं धनं वृद्धिसहितं प्रत्यर्पितवान्। पत्नीपुत्रादिभिः सह सुखेन जीवितवान् च।





# प्रशंसाप्रियता

मणिपुरराज्यस्य राजा चन्द्रवर्मा। सः राजधर्मं विना लोपं पालयन् न्यायेन मार्गेण राज्यं परिपालयति स्म। प्रजाः पुत्रवत् प्रीत्या पश्यति स्म सः। अतः जनाः तस्मिन् विशेषतः स्निह्यन्ति स्म। 'अस्माकं महाराजः प्रत्यक्षः धर्ममूर्तिः' इति वदन्ति स्म ते।

दोषरहितः जनः लोके कोऽपि न भवति खलु? चन्द्रवर्मराजे अपि कश्चन दोषः आसीत् एव। प्रशंसावचनैः सः बहुशीघ्रं तुष्टः भवति स्म। ये स्तुतिं कुर्वन्ति तेभ्यः विशेषपारितोषिकाणि यच्छति स्म सः।

राज्ञः प्रशंसाप्रियता स्वार्थसाधकैः कैश्चित् ज्ञाता। ते राजानं विविधैः वचनैः प्रशंसन्तः तदीयां प्रीतिं सम्पादितवन्तः। एवं राज्ञः प्रीतिं सम्पाद्य अमित्राणां विषये मिथ्यावचनानि उक्तवन्तः। राजा तेषु विश्वसन् स्वार्थसाधकैः सूचितान् जनान दण्डितवान्, कारागारे स्थापितवान् च। बहवः निरपराधिनः, सरलाः च दण्डिताः अभवन्। अतः क्रमशः राज्ञः जनप्रियता क्षीणा जाता। ये राज्ञः हितकाङ्क्षिणः आसन् तेषां मनसि एतेन महान् खेदः उत्पन्नः।

कदाचित् आस्थानज्योतिषिकः श्रीनन्दः राजप्रासादात् निर्गच्छन् आसीत्। तावता पनसफलं स्कन्धे आरोप्य राजभवनं प्रति आगच्छन् कश्चन कृषिकः तेन दृष्टः।

श्रीनन्दः तं स्थगयित्वा पृष्टवान्– "भोः, महत् पनसफलम्। पक्वम् इव भासते अपि। एतत् कुत्र नयन् अस्ति?" इति।

श्रीनन्दः कः इति सः कृषिकः न जानाति। अतः सः कृषिकः श्रीनन्दं सकृत् परीक्षादृष्ट्या दृष्टवान्। 'एषः उच्चोद्योगे स्थितः कश्चित्' इति सः ज्ञातवान्। अतः विनयं प्रदर्शयन् सः सरलतया उक्तवान्– "मम उद्याने प्राप्तं

प्रथमं फलम् एतत्। राजा प्रत्यक्षदेवता इति प्राज्ञाः वदन्ति। अतः राज्ञे समर्पणीयम् इति उद्देशेन एतत् नयन् अस्मि" इति।

"एवं वा? सन्तोषस्य विचारः एषः। 'तिष्ठतु' इति मया किमर्थम् उक्तम् इति न ज्ञातं खलु भवता? भवतः मुखलक्षणात् ज्ञायते यत् भवान् अचिरात् एव एतस्य देशस्य राजा भविष्यति इति। एतत् वक्तुम् एव भवन्तं स्थगितवान् अहम्। अस्तु, आगच्छामि तावत्" इति उक्त्वा अग्रे प्रस्थितवान् श्रीनन्दः।

चन्द्रशालायाम् उपविश्य वायुसेवनं कुर्वन् राजा चन्द्रवर्मा एतानि वचनानि श्रुतवान्। सः नितराम् आश्चर्यचकितः। 'आस्थान-ज्योतिषिकस्य मुखात् एव एतत् वचनं निर्गतम् इत्यतः एतत् मिथ्या न स्यात्' इति आलोचितवान् राजा। अग्रे किं प्रवर्तते इति द्रष्टव्यम् इति इच्छा उत्पन्ना राज्ञः मनसि।

श्रीनन्दस्य वचनानि श्रुतवान् कृषिकः रोमाञ्चितः जातः। तस्य मुखं विकसितम्। नेत्रे विशाले जाते। सः झटिति श्रीनन्दस्य समीपं गत्वा— "श्रीमन्! क्षणकालं तिष्ठतु तावत्! भवता यत् उक्तं तत् सत्यम् एव वा? राजपदवीप्राप्तिः मम ललाटे लिखिता अस्ति वा?" इति कुतूहलातिशयेन पृष्टवान्।

"भवतः मुखं दृष्ट्वा मया किञ्चित् उक्तम्। एतत् एव विस्तरेण वदामि चेत् मम कः लाभः?" इति पृष्टवान् श्रीनन्दः।

'राजलक्षणद्योतकं किं चिह्नं मम मुखे स्यात्?—कथञ्चित् एतत् ज्ञातव्यं मया' इति



निश्चितवान् सः कृषिकः।

"श्रीमन्! कृपया भवतः वचनस्य आशयं विस्तरेण वदतु। अहं तु अल्पः निर्धनः। एतत् अल्पम् उपायनं स्वीकृत्य सर्वं विस्तरेण वदतु कृपया" इति दैन्येन प्रार्थयन् स्कन्धस्थं पनसफलं श्रीनन्दस्य पादयोः पुरतः स्थापितवान्।

तदा श्रीनन्दः मन्दहासपूर्वकं पृष्टवान्— "अहं कः इति भवान् जानाति वा?" इति।

"महानुभावः भवान् कः इति अहं न जानामि। इतः पूर्वं भवान् कुत्रापि मया न दृष्टः अपि। दर्शनात् तु ज्ञायते यत् भवान् कश्चन महानुभावः इति" इति उक्तवान् कृषिकः।

"पश्यतु, अहं कः इत्येव भवान् न जानाति। भवतः हस्ते स्थितं पनसफलं वशीकर्तुम् इच्छन् अहं यत् उक्तवान् तत्र विश्वस्य माम् अनुसरन् अस्ति। निर्धनः सामान्यः कृषिकः कदापि राजा भवितुं नार्हति इति सामान्यः विषयः एव विस्मृतः भवता। अतः एव महाराजाय दातुं यत् आनीतं तत् मह्यम् अर्पितवान्। एतेन ज्ञायते यत् भवान् कश्चन मूढः इति। अविचार्य सर्वेषु वचनेषु विश्वासः न करणीयः। लोके स्वार्थसाधकाः बहवः। प्रियवचनानि उक्त्वा वशीकृत्य स्वार्थं साधयिष्यन्ति ते। अतः जागरूकता आश्रयणीया सदापि। एतत् महाराजाय उपायनरूपेण अर्पयतु। गृहे अन्यत् फलम् अस्ति चेत् 'तत्र दृश्यते खलु तत्' मम गृहम् आनीय अर्पयतु, मूल्यं नयतु च" इति उक्त्वा ततः निर्गतवान् श्रीनन्दः।

एतत्सर्वं दृष्टवति राज्ञि विवेकः उत्पन्नः। 'तस्य सामान्यस्य कृषिकस्य मम च कोऽपि भेदः नास्ति। सः मिथ्यावचनेन यथा वशीकृतः अभवत् तथैव अहम् अपि प्रशंसावचनैः वशीकृतः भवामि। एवं चेत् अहम् अपि मूढः एव' इति आलोचितवान् सः।

श्रीनन्दस्य उपायः फलितः। राजा प्रशंसाप्रियतां परित्यज्य विवेकेन व्यवहृतवान्। उत्तमः राजा इति कीर्तिं प्राप्तवान् च।





## वज्रोत्पत्तिः

भूगर्भे स्थिताः अङ्गाराः अत्यधिकायाः उष्णतायाः भूभारस्य च कारणतः स्फटिकरूपं, ततः वज्ररूपं च प्राप्नुवन्ति। कदाचित् अग्निपर्वताः यदा विस्फोटिताः भवन्ति तदा एतानि वज्राणि भूगर्भात् निर्गत्य भूमौ पतन्ति।

## अल्पजीविनः दृढतरग्रहणम्

आंग्लभाषया 'लिम्पट्' इति कथ्यमानः शङ्खाकारकः कश्चन कीटः स्वपादाग्रेण शिलां दृढं गृह्णाति। तस्य ग्रहणं तावत् दृढतरं भवति यत् तस्य ग्रहणं शिथिलीकरणीयं चेत् तस्य कीटस्य भारः यावत् अस्ति ततोऽपि २००० गुणिता शक्तिः उपयोक्तव्या।



## भूमितः उत्पद्यन्ते 'मेषाः'

न्यूजीलाण्डदेशे सूक्ष्मपर्णाः गुल्मानि विविधानि [illegible] समूहाकारकरूपेण प्रवर्धन्ते। दूरात् दृष्टः चेत् भाति यत् मेषाः तृणानि चरन्तः सन्ति इति। अतः एतेषां [illegible] नाम 'वनस्पतिमेषाः' इति।



# मुखे म्लानता

| | |
|---|---|
| रामः- किं भोः, अस्वस्थः वा भवान्? काऽपि चिन्ता बाधते इति भाति? | I say, are you not doing well or are you worried about something? |
| कृष्णः- जीवनं नाम तत्र मनःक्लेशाः आगच्छन्ति, गच्छन्ति च एव खलु? | Worry is there in everyone's life. Isn't it? |
| रा- तादृशः कः क्लेशः आपतितः? मां वदतु तावत्। आत्मीयेषु निवेदनात् मनसः भारः अपगच्छति। | What is it you are worried about? Tell me. By speaking about your problems to people close to you, you will feel relieved to an extent. |
| कृ- भवान् दिनेशं जानाति खलु? | You know Dinesh, don't you? |
| रा- आं, जानामि। सः भवतः सहपाठी आसीत्। | Yes, he was your classmate. |
| कृ- बहुभ्यः वर्षेभ्यः आवयोः गाढा मैत्री आसीत्। तस्मिन् विश्वस्य मया तेन कृतस्य ऋणस्य प्रतिभूत्वम् अङ्गीकृतम् आसीत्। | We were long-time friends. I bailed him out of his debts as I had great trust in him. |
| रा- इदानीम् ऋणप्रत्यर्पणभारः भवदुपरि पतितः वा? | You are now responsible for the repayments? |
| कृ- आम्। तावदेव न, मां गर्ते पातयित्वा, सः तु निश्चिन्ततया सुखेन जीवति इति वार्ता। | Yes. Not only that, I heard that after landing me in trouble he is living happily. |
| रा- भवतः सज्जनत्वं जानन् स्वार्थसाधकेषु कश्चित् दिनेशं वञ्चनामार्गम् उपदिष्टवान् स्यात्। तस्मिन् विश्वस्य दिनेशः विश्वासद्रोहम् आचरितवान् स्यात्। | Knowing about your good nature, some unscrupulous man might have given Dinesh the idea of cheating you. Acting on the man's advice, Dinesh would have done what he did. |
| कृ- ममापि तथैव भाति। सर्वं मम दौर्भाग्यस्य फलम्। | I also think so. It is my fate. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां जनवरी-९२ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

* उपरितन चित्रद्वयं पश्यन्तु। * युक्ता शीर्षिका परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगता शीर्षिका न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः –

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **सजातीयताहेतोः समीपम् आगतौ एतौ।**

द्वितीयचित्रम् - **समानशीलताहेतोः सहैव स्थिते एते।**

प्रेषकः - सनत्कुमारः उपाध्यायः, श्रीशङ्कराचार्यसंस्कृतविद्यालयः द्वारका, जामनगर-३६१३३५




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गारः - | Charcoal | निरुद्योगी - | Unemployed |
| अभिजानाति - | Recognizes | पनसफलम् - | Jack fruit |
| अरित्रम् - | Helm of a ship | पौत्रः - | Grandson (Son's son) |
| उत्कोचः - | Bribe | प्रतिनिधिः - | Representative |
| उपचयः - | Crop | प्रथा - | Statement |
| कार्पासः - | Cotton | भञ्जितवान् - | Broke |
| क्षुल्लकः - | Flimsy | मरीचः - | Pepper |
| गिलति - | Swallows | मृत्तिका - | Mud |
| घटिकोत्सवः - | Convocation | मृद्घटः - | Earthen pot |
| चन्द्रशाला - | Open terrace | यथाशक्ति - | As far as possible |
| जग्ध्वा - | Having chewed | वयनम् - | Weaving |
| जीर्णः - | Dilapidated | शुकः - | Parrot |
| ताम्रकङ्कणम् - | Copper bracelet | शून्यम् - | Zero |
| तारतम्यम् - | Partiality | शैवालम् - | A kind of water plant |
| तृणम् - | Grass | सकृत् - | Once |
| दहति - | Burns | सर्वप्रावीण्यम् - | Championship |
| दायित्वम् - | Responsibility | सानुरोधम् - | By compulsion |
| नाणकम् - | Coin | संहतिः - | Unity |
| निक्षिप्तम् - | Was kept | स्निह्यति - | Shows affection |

* * *

